महाराजाधिराज-कामेश्वरसिंह-ग्रन्थमाला--७

# वातावरणनाटकम्

( बसात-नामक-मैथिली-सामाजिक-नाटकस्यानुवादः )

नाटककारः

**पण्डित श्री गोविन्द झा**

अनुवादकः

**डॉ० श्री शशिनाथ झा**



**[illegible]रसिंह-दरभंगा-संस्कृत-विश्वविद्यालयः**

महाराजाधिराज-कामेश्वरसिंह-ग्रन्थमाला---७

# वातावरणनाटकम्

( बसात-नामक-मैथिली-सामाजिक-नाटकस्यानुवादः )


नाटककारः

**पण्डित श्री गोविन्द झा**


अनुवादकः

**डॉ० श्री शशिनाथ झा**



प्रकाशकः

कामेश्वरसिंह-दरभङ्गा-संस्कृत-विश्वविद्यालयः, दरभङ्गा

# आमुखम्

अथायं प्रकाश्यते वातावरणन्नाम नाटकम् । एतद्धि मैथिली-भाषानिबद्धम्य 'वसात' नामक-नाटकस्य संस्कृतानुवादः । मूलकारः सुहृद्वरः पं० श्री गोविन्द झा प्रथितसाहित्यकारः । तस्यैतन्नाटकं मिथिलायां परमं प्रसिद्धम् । एतादृशस्य सामाजिकनाटकस्य प्रकाशनेन संस्कृतसाहित्यस्य भाण्डागारः सुशोभितः स्यात् । मैथिलेताराणां कृते अभिनवं नाटकमिदं परमं प्रमोदाधायकं स्यादिति निश्चप्रचम् ।

अनुवादकश्चास्य सफलसम्पादको वैयाकरण आयुष्मान् पं० श्री शशिनाथ झा शर्माऽस्मिन् नाटके सरलीकृत-संस्कृतस्य प्रयोगं विधाय सामान्य-संस्कृतप्रेमवतां छात्राणाञ्च कृते परमोपकारकं पन्थानं प्रशस्तीकृतवान् । भाषा सरला प्रवाहमयी अभिनययोग्या चेति एतन्नाटकस्य प्रथमाभिनयेऽत्रैव विश्वविद्यालये विदुषां पुरतः प्रमाणितम् । अत्र मूलस्य भावः सर्वथा सुरक्षितोऽवलोक्यते ।

आशासे नाटकमिदं विद्वत्सु, रसिकेषु, छात्रेषु अभिनेतृषु च आदरणीयतां प्राप्नुयादिति ।

डॉ० जयमन्त मिश्रः,

१६-६-८४

कुलपतिः,

का० सिं० द० संस्कृत विश्वविद्यलयः, दरभङ्गा

## महापण्डित श्रीमदर्जुनझा-महोदयानां

[ का०सिं०दरभङ्गा-संस्कृत-विश्वविद्यालयीय-शास्त्रचूडामणि-पण्डितानाम् ]

# सम्मतिः

प्रथित - मैथिलीसाहित्यकार - पण्डितमण्डलमण्डनायमान - श्रीगोविन्दझाशर्ममहोदयेन १९४६ तमे खृष्टाब्दे रचितस्य ग्रामे ग्रामे मुहुरभिनीतस्य चमत्कारजनकस्य परमख्यातिमापन्नस्य "बसात" नामक-मैथिलीनाटकस्य विद्यावारिधि पण्डित श्रीशशिनाथझाशर्मद्वारा विहितं संस्कृतानुवादमामूलचूलमालोक्याहमानन्दसन्दोहमनुभवामि ।

सुयोग्यानुभवशीलानुवादकेन विदुषा भाषान्तरविधौ संस्कृतव्याकरणस्यावश्यक-सकलनियमा यथायथं परिपालिताः सन्ति, केवलं सरलता-सुबोधता-सम्पत्तये वाक्येषु विवक्षाधीनसन्धीनामुपेक्षा कृतास्ति, या नाटक-साहित्ये गुणगणाधायिकैवास्ति, न दोषाधायिकेति ।

अहमस्य संस्कृतभाषोपनिबद्धस्य वातावरण-नामक-नाटकस्य प्रचुरं प्रचारं प्रसारं च कामयमानोऽनुवादकायाशीराशीरर्पयामीति ।

अर्जुन झा

२२-५-८३

# भूमिका

डॉ० विधाता मिश्रः, प्राचार्योऽध्यक्षश्च,
स्नातकोत्तरव्याकरण-भाषाविज्ञानविभागः
का० सिं० द० संस्कृतविश्वविद्यालयः, दरभंगा

पण्डितवर श्री शशिनाथ झा शर्मणा मैथिलीभाषातोऽनूदितं प्राञ्जलं चेतःप्रसादकं नूतनं वातावरणनामकं 'बसात' नाटकं विलोक्य अतीव आनन्दं लभे। अत्र सरला शब्दावली शोभनो वाक्यविन्यासः, स्पष्टश्च आशयः हृद्यतां यान्ति। मूलग्रन्थस्य भावः सर्वथा सुरक्षितोऽस्ति। हास्यरसस्य मूलानुसारं प्रदर्शनं कठिनं भवति, तथापि अत्र झा-महोदयेन प्रयत्य तदपि सुरक्षितं कृतम्।

मैथिलीसाहित्ये प्रख्यात-नाटकेषु नाटकमिदं परिगण्यते। समाजे च परां प्रतिष्ठां लभते। यतो हि इदं वर्तमान-समाजस्य दर्पण इव विद्यते। १९४६ ई० वर्षे रचिते नाटकेऽस्मिन् सामाजिकस्थितेः परिवर्तनस्य एकं चित्रं प्रस्तुतम् अस्ति। साम्प्रतं सकलक्षेत्रेषु परिवर्तनं दृश्यते। सामाजिकव्यवस्थासु अपि नूतना रीतिः क्रमशो व्याप्नोति। यदैव द्वित्रैः कश्चिद् नवीनो व्यवहारः प्रारभ्यते, तदनुसारिभिश्च कैश्चिद् अनुक्रियते, तदैव समाजे क्रमशः तस्य प्रचारो भवति। स व्यवहारो वायुभूतः सर्वत्र प्रसरति। इत्थं वायुभूतो व्यवहार एव नाटकेऽस्मिन् 'वात' शब्देन उक्तः। यथा सुष्ठु उक्तं प्रस्तुतनाटकीयपात्रेण जगदीशेन—

"जीवनम् अस्ति आकाशे उत्तोलितो ध्वजो यद् वातप्रवाहे निरन्तरं दोधूयते, प्राचीने वायौ पश्चिमाभिमुखम्, प्रतीचीने च पूर्वाभिमुखम्" इति (१-१)।

नाटकस्यास्य मन्थनेन निष्कर्षोऽयं प्रतिभाति यद् (१) असमीक्ष्यकारिता विपत्तेः मूलमस्ति तथा (२)सा ईर्ष्या ईर्ष्यास्ति यया नूतन-समाजस्य निर्माणं

भवेद् इति। कृष्णकान्तेन पुष्पायाः गुणम् अविज्ञाय एव अशिक्षितेति मत्त्वा सा तिरस्कृता। स कथयति—"मम नेत्रे तु मिथिलायाः सर्वैव कन्या गलगण्ड-रूपा" इति (१-६)। मनस्विन्या तया असह्यदुःखया गृहं परित्यक्तम्। व्रतं च गृहीतं यद् अतः प्रभृति नारीसमाजस्य उद्धारार्थं सकलं समर्पयिष्यामि इति। कतिपयवर्षैरेव स एव कृष्णकान्तो नतमस्तको भवति। वस्तुतो नाटकस्यास्य "नारीजागरणम्" इति नाम उचितं प्रतीयते। पुष्पया कृषिकलोद्योग-शिक्षा-देशरक्षादि-सकलविधासु नारीणां प्रवृत्तिः जागरिता। अन्या महिला चेद् ईर्ष्यया प्राणपातं कुर्यात्। किन्तु पुष्पा ईर्ष्ययैव नारीरत्नत्वं गता।

मानवजीवने विवाहो महत्त्वपूर्णः संस्कारोऽस्ति। तदनन्तरं जीवनस्थितिः अवस्थान्तरं याति। पुरातनी वैवाहिकी घटना साम्प्रतं समाप्तप्रायाऽस्ति। इति नाटकेस्मिन् युगानुरूपतया वर्णितम्। यथैव देशे पाश्चात्यप्रभावो दरी-दृश्यते तथैव अस्मिन् नाटकेऽपि कृष्णकान्तो लिलीदेवी च उपस्थापितौ। भार-तीयादर्शभूता च पुष्पा दृश्यते। अतो यत्र कृष्णकान्तो दुःखातिशयवशाद् वाष्पशकटे प्राणान् घातयितुं प्रवृत्तः तत्र पुष्पा तादृश्यामेव अवस्थायां नूतनं मार्गम् आश्रयति।

'वातावरण' नाटकेन अनेन समाजप्रतिबिम्बेन शिक्षाप्रदेन समाजे विल-क्षणः प्रभावः स्यात्। नूतनाऽपि औचित्यपूर्णा रीतिः कथम् आश्रयणीया इत्यत्र मार्गदर्शकमिदं नाटकम्। अनेन नारीसु कर्त्तव्यभावना जागरिता स्यात्। पत्युः शिरसि भारस्वरूपा सती पत्युर्भाग्यमेव स्वभाग्यं मन्वाना ललना आहूता कर्त्तव्यपथे कविना—

"आयाहि आयाहि चल,  
अञ्चले कार्पासं धर,  
घों घों चालय तर्कुचक्रम्।  
कृष्णचन्द्र - वीर इव  
द्रौपद्याश्चीरमिव  
वर्षय त्वं भूरि वस्त्रम्॥

शीतेन विकलस्तेऽद्यापि भर्त्ता
पिधेहि पिधेहि तस्य गात्रम् ॥ सखिहे ॥" (३-२) ॥

शृङ्गाररसः अङ्गी, अन्ये च सर्वेपि रसा अङ्गतया समायाताः। तत्रापि हास्यरसः अतीव चमत्कारको विद्यते। कथावस्तु अतिशय प्रशस्तं पञ्चार्थ-प्रकृतियुक्तं पञ्चावस्थासमन्वितं, पञ्चसन्धिलक्षितं नाट्यशास्त्रानुकूलं विद्यते।

वस्तुतः नाट्यशास्त्रोक्तं नाटकलक्षणं युगानुकूलं किञ्चित् परिवृत्य नाटकेऽस्मिन् संघटते। मन्ये, संस्कृते अभिनवं वस्तु स्याद् इदं नाटकम्। अनेन संस्कृतसाहित्यस्य भाण्डागारः प्रशस्तः स्याद् इति मे दृढो विश्वासः।

अनुवादकः प्रशंसार्हः यद् एतादृशग्रन्थरत्नस्य संस्कृतेऽनुवादं विधाय सफलपरिश्रमोऽभूदिति नाटकस्यास्य प्रचारं प्रसारं च कामयते।

दरभङ्गा
२।७।८०

डा० विधाता मिश्रः

# पात्र-परिचयः

## पुरुष - गणः

१ कृष्णकान्तः १९ बर्षीयः, महाविद्यालयस्य छात्रः ।
२ जगदीशः २० बर्षीयः, कृष्णकान्तस्य मित्रम, छात्रः ।
३ ज्यौतिषिकः ६० बर्षीयः, कृष्णकान्तस्य पिता, विद्वान् ।
४ ठेङाः ७० बर्षीयः, घटकः (वैवाहिक-घटना-कर्त्ता) ।
५ टुनटुनः १८ बर्षीयः, शूद्रः, ज्यौतिषिकस्य भृत्यः ।
६ घूटरः ३० बर्षीयः, ज्यौतिषिकस्य अनुजः, दरिद्रः, मूर्खः, खञ्जः ।
७ अधिवक्ता ६० बर्षीयः, लिलीदेव्याः पिता, धनवान्, विधिवेत्ता ।
८ फलाहरी ४५ बर्षीयः, पुष्पायाः पिता, मध्यवित्तो गृहस्थः ।
९ वटुः ५ बर्षीयः, फलाहारिणः पुत्रः ।
१० दिगम्बरः ३० बर्षीयः, अधिवक्तुः पुत्रः, शिक्षितः, अपवृत्तः ।
११ पुरोहितः ५० बर्षीयः, पण्डितः ।
१२ बम्बाबा ६० बर्षीयः, श्मश्रुकूर्चप्रवृद्धः, प्रच्छन्नरूपे ज्यौतिषिकः ।

## महिला - गणः

१ लिली १५ बर्षीया, अधिवक्तुः पुत्री, महाविद्यालास्य छात्रा ।
२ खञ्जनिका १८ बर्षीया, लिलीदेव्याः दासी ।
३ पुष्पा १८ बर्षीया, फलाहारिणः पुत्री ।
४ सुगिया ३० बर्षीया, निम्नजातेः अशिक्षिता महिला ।

★★

# वातावरण-नाटकम्

॥ प्रथमोऽङ्कः ॥

तत्र प्रथमं दृश्यम्

[ छात्रावासस्यैकं प्रकोष्ठम् । एका चतुष्पादिका, एकः पुस्तकमञ्चः, तदुपरि च कतिपयानि पुस्तकानि । एकस्याम् आसन्द्यां समुपविष्टः कृष्ण-कान्तः हस्तन्यस्तशिराः पुस्तके निमग्ननेत्रो दृश्यते । पृष्ठतः तूष्णीमागत्य जगदीशः सहसा 'हाउ' शब्दम् उच्चैः उच्चरति । कृष्णकान्तः तेन सच-कितं विधूतदेहः पश्यति पृष्ठभागम् । ]

कृष्णकान्तः—कोऽसि रे, जगदीश ? प्राप्तेऽपि स्नातकत्वे विद्यालयीया चञ्च-लता न गता ते ? एहि, उपविश ।

जगदीशः—( अपरस्याम् आसन्द्याम् उपविश्य ) किं गोधूलिवेलायाम् अचल-समाधौ संमग्नोऽसि ! चल इदानीम् ।

कृष्ण०—त्वं याहि । अहमद्य न गमिष्यामि ।

जगदीशः—कथम् ?

कृष्ण०—अद्य नास्ति सौम्या मे मनःस्थितिः ।

जगदीशः—स्वस्थचित्तो नाऽसि, कस्मात् कारणात् ?

कृष्ण०—त्वं जानासि यद् अहं विवाहं कर्त्तुं नेच्छामि । तातश्च हठं करोति यद् विवाहः करणीय एवेति ।

जगदीशः—अये, विवाहाद् एवं बिभेषि कथम् ? बी० ए० समुत्तीर्ण एवासि, गृहाण कस्मिंश्चिदपि विद्यालयेऽध्यापक-पदम्, आस्वादय च जीवनरसं सुखेन ।

कृष्ण०—नाऽहं त्वमिव काणः कुक्कुरः, यद् मण्डेनैव तृप्तो भविष्यामि। यदि इदानीम् अहं विवाह-जाले आवद्धो भवामि तर्हि मम जीवनस्य सकला योजना विफला भविष्यति, सर्वा महत्त्वाकाङ्क्षा ध्वस्ता भविष्यति।

जगदीशः—का ते योजना, का च महत्त्वाकाङ्क्षा? एम० ए० समुत्तीर्य कुत्रापि च प्राध्यापको भवानि इत्येव नु किम्?

कृष्ण०—अल बुद्बुदयसे।

जगदीशः—तत्किं प्रथममेव प्रधानमन्त्री भविष्यसि?

कृष्णः—त्वं कथं ज्ञास्यसि का नाम महत्त्वाकाङ्क्षेति।

जगदीशः—कथम्? मम महत्त्वाकाङ्क्षा त्वदपेक्षया अल्पीयसी किम्?

कृष्ण०—त्वयि वास्तविकी महत्त्वाकांक्षा चेद् एवं लक्ष्यहीनो न अभ्रमिष्यः, अपितु जीवनस्य काञ्चन योजनाम् अन्वसरिष्यः।

जगदीशः - अये, स्वप्नलोकेऽसि त्वम्? जीवनं कदाचिदपि योजनाम् अनुगच्छति? जीवनमस्ति आकाशे उत्तोलितो ध्वजः, यद् वात-प्रवाहे निरन्तरं दोधूयते—प्राचीने वायौ पश्चिमाभिमुखीभवति, प्रतीचीने च पूर्वाभिमुखीभवति।

कृष्ण०—इयं परिभाषा त्वादृशानां दुर्बलहृदयानां जीवनस्ऽस्ति। देशस्य दौर्भाग्यं यद् अत्रत्याः त्वादृशा युवकवर्गा इदानीमपि स्वजीवनं परिस्थिते र्दासं मन्यन्ते। इयमेव दौर्बल्यभावना मैथिल-समाजं पङ्गुमकरोत्। पश्य बङ्गीयम्, पश्य मद्रीयम्, तत्रत्यः सर्वोऽपि युवकः परिस्थिते र्विरुद्धं कियत् साहसं करोति, कियन्तं संघर्षं करोति, केन प्रकारेण च स्वमार्गं प्रशस्तं करोति।

जगदीशः तथैव त्वम् अधुना विवाहस्य विरुद्धं संघर्षं करोषि। मुदा, अपीदं विचारयसि? विवाहं न करिष्यसि चेद् 'ज्यौतिषिकः'

अध्ययन-सम्बल-प्रदानाद् विरतो भविष्यति, एवं सति तव सकलाऽपि योजना कल्पनामात्रं स्थास्यति ।

कृष्ण०—तदेव तु विचारयामि यत् किं करवाणीति ।

जगदीश:—मम विचारं श्रोष्यसि ?

कृष्ण०—किम् ?

कृष्ण० - कस्याश्चिद् धनपुष्टाया अवीरायाः पुत्र्या विवाहं कुरु । पिताऽपि न अप्रसन्नो भविष्यति ; दोग्ध्री श्वश्रूः पठन-व्ययमपि पूरयिष्यति ।

कृष्ण०—इयमेव तु साम्प्रतं युवकसमाजे वात्येव प्रवहमाना रीतिः यद् 'मैट्रिक' परीक्षोत्तीर्णताऽनन्तरमेव कश्चिल् 'लोभे' निबद्धो भवति, कश्चिच्च 'लभे'। प्रारभ्यते च सद्यः प्रणय-विलासमयं जीवनम् । छात्रो भवति अर्थशास्त्रस्य, अभ्यस्यति च कामशास्त्रम् । जीवनस्य सर्वा तपस्या समर्पिता भवति मदालसायाश्चरणयोः । यदा च मदालसमक्षि उन्मीलितं भवति तदाऽऽत्मानम् आसादयति निस्सहायं, निरवलम्ब, निर्जीविकं, तदुपरि च पञ्चषाणां सन्ततीनां पूज्यपितृपदे प्रतिष्ठितम् ।

जगदीश:—अहो ! एतस्मादेव पूज्य-पितृपद-गौरव-धारणभयात् त्वं विवाहाद् विरतो भवसि !

कृष्ण०—ओह ! जगदीश ! अस्माकं समाजे साम्प्रतं को नाम विवाहः, एका विचित्रा दुर्घटना, एका विचित्रा विडम्बना । जानासि तस्य कारणम् ? पुरुष उत्पतति आकाशे, महिला च निपतति पाताले । तथा च यदि उभौ परस्परम् आबद्ध्येते तर्हि दाम्पत्य-जीवनं त्रिशङ्कुवद् मध्य एव लम्बमानं तिष्ठति । यदवधि एतस्य व्यवधानस्य अन्तो न भविष्यति, यदवधि च महिला पुरुषं प्राप्तुं समां कक्षां यावद् ऊर्ध्वं नोत्तिष्ठति, तदवधि इयं दुर्घटना, इयं विडम्बना एवमेव स्थास्यति -पुरुषः अग्रे सर्त्तुं चेष्टमानः, महिला च पृष्ठतस्तस्य चरणौ निगडितुं यतमाना ।

जगदीशः - मन्ये तस्मादेव त्वम् एकाकी एव अग्रे सर्तुम् इच्छसि। इदानीं सर, परन्तु कियद्दूरङ्गतः कस्याश्चिद् व्यक्तेरभावम् अनुभविष्यसि; वर्त्म - सन्तरणार्थं किमप्यन्यत् साहाय्यम् आवश्यकम् इति मंस्यसे।

कृष्ण० - यदा तदभावोऽनुभविष्यते तदा स विचारः करिष्यते, परन्तु इदानीं यद् द्रव्याभावस्यानुभवो भवति तदर्थं कम् उपायं चिन्तयसि ?

जगदीशः - अन्यः क उपायः, कुत्रापि भृतकाध्यापनं कुरु।

कृष्णः - आम् सम्यग् भणसि। अयमेव उपायोऽस्ति। कुत्राऽपि तदवसरश्चेत् सूचयिष्यसि। त्वं च कुत्र भृतकाध्यापनं करोषि ?

जगदीशः - लिलीदेवीं जानासि ?

कृष्ण० - का लिलीदेवी ? अधिवक्तृमहोदयस्य पुत्री ?

जगदीशः - आम्, सैव मम छात्राऽस्ति।

कृष्ण० - अये, विषमाम् असिधारां सम्प्राप्तोऽसि। सावधानेन वर्तितव्यम्।

जगदीशः - सत्यम्, मम स्थाने त्वं चेद् अभविष्यः, तर्हि तव सकलाऽपि योजना विलीनाऽभविष्यत्।

कृष्ण० - आश्चर्यम्! कथम् अधिवक्तृमहोदय-सदृशः प्रौढबुद्धि जनः त्वादृशस्य लम्पटस्य हस्ते "...

जगदीशः - विरम। माऽधिकं गालिं वद। इदं तु तव दौर्भाग्यं यत् लिलीदेवी त्वादृशं महापुरुषं विहाय मादृशमेव लम्पटं वाञ्छति।

कृष्ण० - ओ! एवमेतत्, नाधिवक्तृमहोदयः, किन्तु लिलीदेवी स्वयं त्वां वृतवती। अस्तु, साधु भण्यते - 'धेनु-गोपयोः सामञ्जस्ये जानुदघ्ने जलेऽपि दोहसम्भव' इति। अहं किमर्थं मध्ये किमपि वदिष्यामि।

जगदीशः - अस्तु, गन्तुमनुजानीहि साम्प्रतम्। अध्यापनस्य समयः समागच्छति। ( उत्तिष्ठति )।

कृष्ण० ( उत्थाय ) तथास्तु, याहि। मामपि कुत्राऽपि भृतकाध्यापने नियोजयितुं यतिष्यसे।

॥ ० ॥

## द्वितीयं दृश्यम्

[ द्वारगृहाग्रभागे चतुष्पादिका । तदुपरि समास्तीर्णं कम्बलम् । ज्यौतिषिकः समुपविष्टो मार्गे दत्तदृष्टिः । ]

ज्यौतिषिकः—( दूरादेव कमपि आगच्छन्तं विलोक्य ) अहो ! मन्ये, अयं ठेङ्गाबाबू-महोदय आयाति । ( उत्थाय ) नमस्कारः ।

[ ठेङाबाबूः समागच्छति ]

ठेङ्गा० – नमस्कारः । अपि परिवारः सकुशलः ?

ज्यौ० - आम्, अस्ति भवताम् आशीर्वादेन । स्वकीयः कथ्यताम् ।

ठेङ्गा - आम्, यथोचितमस्ति ।

ज्यौ० – (रिक्तं जलपात्रम् उपहरन् ) पादौ प्रक्षालयतु ।

ठेङ्गा - ( तस्य हस्तात् जलपात्रम् आदाय रिक्तं च विलोक्य ) कृतमनेन ।

ज्यौ० - किम् ? जलपात्रं रिक्तमेवास्ति किम् ? पश्यतु--'टुनटुनमा' भृत्यस्य पामरत्वम् । रिक्तमेव जलपात्रं विहाय कुत्रापि पलायितः । टुनटुनमा ! टुनटुनमा असि रे !! ... अहो दौर्भाग्यम्, भगवता शिशुरपि न प्रदत्तो य इदानीं जलमानयेत् । दीयतां जलपात्रम् । स्वयमहमानयामि ।

ठेङ्गा – आस्तां तावत् । एतदर्थं भवता कष्टं न कार्यम् । नास्त्यावश्यकम् ।

[ उभावपि उपविशतः ]

ज्यौ० - अहो, कथमेतद् भविष्यति ? मन्ये नायाति भवान् इह, अयाति चेद अश्वारूढ एव ।

ठेङ्गा - किमधिकं कथयामि ज्यौतिषिक ! तादृश एव कार्ये लग्नोस्मि यत् स्वल्पमप्यवकाशं नासादयामि ।

ज्यौ० - कस्मिन् कार्ये एवं संलग्नो भवान् ? तत् मयापि ज्ञातुं शक्यते किम् ?

ठेङ्गा - अहो ! भवत एव कार्यम्, कथं भवन्तमेव न कथयिष्यामि ?

ज्यौ० - मादृशात् तुच्छात् जनात् किं कार्यं भविष्यति ? तिथिपत्रे मुहूर्त्तम् अन्वेषणीयं चेत् तद् मया शक्यते कर्त्तुम् ।

ठेङ्गा - पश्चाद मुहूर्त्तमपि अन्वेषणीयं स्यादेव । प्रथमं कार्यस्य चर्चा भवतु ।

ज्यौ० - कथ्यताम् । मच्छक्यं यद् भवेत् तत् सम्पादितमेव मन्यताम् ।

ठेङ्गा - (प्रसन्नः सन्) आम्, आम् । कस्तत्र सन्देहः । तामेव हि आशामवलम्ब्य समागतोऽस्मि । विश्वम्भरचौधरीम् अधिवक्तारं जानाति भवान् ?

ज्यौ० - अहो, तं कथं न जानामि ? स खलु मम श्यालीपतेः वलेल-मिश्रस्य साक्षाद् मातृष्वस्रेयस्य पितृव्य-पुत्रोऽस्ति ।

ठेङ्गा - वस्तुतः तस्यैव कार्यवशाद् अहं समागतोऽस्मि ।

ज्यौ० - स किमर्थं माम् अपेक्षते ? अपि स वासस्थलं शोधापयिष्यति ? स तु नव्य-मार्गानुसारी शास्त्र-पुराण-धर्मशास्त्रस्य तिथिपत्रादीनां प्रामाण्ये सन्दिह्यति ।

ठेङ्गा - तस्य एका कन्याऽस्ति ।

ज्यौ० - ओ ! तस्याः जन्मकुण्डलीं, निर्मापयिष्यति ?

ठेङ्गा - न जन्मकुण्डलीं विवाह-कुण्डलीमितिकथ्यताम् ।

ज्यौ० - भोः, विवाह-कुण्डलीति तु न श्रुतं कदापि ज्यौतिषशास्त्रे ।

ठेङ्गा - नाऽहं ज्यौतिषप्रसङ्गेन अपि तु वैवाहिकप्रसङ्गेन समागतोऽस्मि ।

ज्यौ० - ओ, इदानीं ज्ञातवृत्तोऽस्मि । भवान् मत्पुत्रप्रसङ्गे विवाहकथाम् आदाय समागतवान् अस्ति !

ठेङ्गा - ओम् ।

ज्यौ० - (क्षणं विरम्य) ठेङ्गा-बाबू ! अन्यस्य भविष्यं तु अहं पश्यामि, परन्तु, स्वकीयमेव भविष्यं तमोभूतमिव लक्षये । एकमात्रं वटुं विहाय अर्द्धाङ्गिनी स्वर्गता । बहवो जना आग्रहं व्यधुः, यत् पुनर्विवाहः क्रियतामिति । परन्तु अहं न कस्याऽप्याग्रहं स्वीकृतवान् । मातृवद् अङ्के निधाय पुत्रं पालितवान् । प्रत्यहम् आशायाः

स्वप्नम् अपश्यम्, यद् एकदा वटु विवाहं करिष्यति, पुत्रवधूः निवत्स्यति, शून्यं प्राङ्गणं पुनः सन्ततिभिः शोभितं भविष्यति ! परन्तु, परन्तु अद्य सकलोऽपि स्वप्नः वस्तुतः स्वप्नतां गतः प्रतिभाति !

ठेङा—किमुच्यते ?

ज्यौ०—किं कथयामि ठेङावाबू ! वटु र्भणति यद् विवाहं न करिष्यामीति।

ठेङा—एतदर्थं भवता न कापि चिन्ता कार्या। साम्प्रतम् एतद् वार्त्येव सर्वत्र प्रसृताऽस्ति—महाविद्यालयं गच्छन्नेव सर्वः कथयति विवाहं न करिष्यामीति.........किन्तु, यदैव सुन्दरी कन्या, परिपूर्णः श्वशुरालयो वा लभ्यते तदा क्षणेनैव मनः परिवर्त्तितं भवति, पुनः पितरावपि न पृच्छति। ज्यौतिषिक ! भवान् केवलं स्वकीयां सम्मतिं ददातु। वरस्य स्वीकृते भारः मदुपरि एव तिष्ठतु।

ज्यौ०—आम्, स तु ममापि विश्वासः यद् आग्रहेण वाधितः सन् बटुः स्वीकरिष्यति कथामिति। परन्तु......।

ठेङा—परन्तु इति किम् ?

ज्यौ०—परन्तु एतावदेव यद् इयं वैवाहिकी कथा तथाऽपि न भविता।

ठेङा - कथम् ?

ज्यौ०—क्षम्यताम्। भवतः को व्याजः ? स्पष्टमेव कथयामि। स अधिवक्ताऽस्ति अतिमहान् वर्तते। साम्प्रतं तु वात एव विपरीतो वाति। पुरातनः समयश्चेद् वयं तत्स्पृष्ट-जलेन लघुशङ्कामपि न अकरिष्याम। भवाँस्तु सर्वमेतद् जानात्येव।

ठेङा—सत्यम्, यथार्थमुक्तं भवता। मया तु एतत् पूर्वमेव बोधितः स अधिवक्ता। तथापि तेन भृशम् आगृहीतो भवते कष्टम् अदाम्।

ज्यौ०— कष्टं नाम कथम् ? एतद् हि मम अहोभाग्यम्, यद् एतद्व्याजेनाऽपि भवच्चरणारविन्दाभ्यां पूतं मद्भवनम्।

ठेङा—अतःपरम् अनुजानातु गृहगमनाय। (उत्तिष्ठति)।

ज्यो० –(उत्थाय) तदेव ? अस्तु, कृपा विधेया। अपि च—एका मम लघ्वी प्रार्थना।

ठेङा – कथ्यताम्।

ज्यो०—एषा कुलीनत्व-विषयिणी या वार्ता कृता, सा भवन्तम् आत्मीयं विज्ञायैव। तद् अधिवक्तृमहोदयस्य कर्णगोचरं कृपया न कार्यम्। स श्रोष्यति चेद् व्यर्थमेव दुःखमनुभविष्यति।

ठेङा—भोः ! कथमेतद् भविष्यति। एतदपि वक्तव्यमेव ? तं तु संक्षेपेणैव कथयिष्यामि यद् वरो विवाहं कर्त्तुं न वाञ्छति, एतद्धि।

ज्यो० – तदेव स्मृत्यर्थं निवेदितं भवते।

★

## तृतीयं-दृश्यम्

[अग्रे अग्रे घूटरः लगुडहस्तः खञ्जपदः प्रविशति । पृष्ठतः टुनटुनः समागच्छति]

टुनटुनः—तात पङ्गुक !

घूटरः—(पश्चाद् विलोक्य लगुडम् उद्यम्य) एकेनैव दण्डप्रहारेण उभौ पादौ ते भङ्क्ष्यामि । अहं पङ्गुरस्मि रे ?

टुनटुनः—यदि पङ्गु र्नाऽसि तर्हि एवम् (अनुकृत्य) ढेकुलीं कथं चालयसि ?

घूटरः—अरे ! ढेकुली-चालनमेतत् ?

टुनटुनः—किं तर्हि ।

घूटरः—एतत् तव ललाटम् (पुन र्लगुडम् उद्यच्छति ।)

टुनटुनः—(रोधयन्) हा हतोस्मि । पुन र्नैवं कथयिष्यामि ।

घूटर —तत् कर्णौ गृहाण ।

टुनटुनः—कस्य, स्वकीयौ भवदीयौ वा ?

घूटरः—पुनः शाठ्यमेव ?

टुनटुनः - नहि-नहि...। एष गृहीतकर्णोऽस्मि (कर्णौ गृह्णाति ।)

घूटरः—वद, पुन र्न कदापि रोषयिष्यामीति ।

टुनटुनः—(मुखं विदूष्य) ओम्, रोषयिष्यामि, कोपयिष्यामि ।

घूटरः—धिङ्मूर्ख ! पामर ! ! (गृहीतुं धावति) निगृह्णामि चेत् षष्ठिका-रात्रि-दुग्धं वमिष्यसि ।

टुनटुनः - (दूरं गत्वा) एहि शक्नोसि प्राप्तुं माम् ?

घूटरः—त्वम् इतस्ततो धावसि ! न प्राप्तुं शक्योसि ! सत्वरं लगुडं प्रक्षिपामि (लगुडं प्रक्षेप्तुं समुद्यतो भवति ।)

टुनटुनः - हा हतोऽस्मि ! चरणौ गृह्णामि । लगुडेन मा ताडय । अहम् एकम् आनन्ददायकं सन्देशं श्रावयामि ।

घूटरः - कः सन्देशः, कुत्राऽपि कन्या उपलब्धा किम् ?

टुनटुनः - (समीपमेत्य) अहो ! त्वं तु सदैव कन्या-कन्येति रारटसि । कन्यायां पुनरन्विष्टायां न सा रोचते तुभ्यम् ।

घूटरः - धिङ् मूर्ख ! किम् अहं खञ्ज्या लुल्या वा विवाहं करिष्यामि रे !

टुनटुनः - तात ! स्वयम् एकपादोऽपि कन्यां द्विपदीं मृग्यसे ? तत् कथं भविष्यति ?

घूटरः- ननु रे ! यदि किञ्चिदपि धनं स्यात् तर्हि द्विपद्याः का कथा, चतुष्पदी अपि उपलब्धुं शक्या ।

टुनटुनः - चतुष्पदी भोः !! हाः हाः हाः (हसति ।)

घूटरः - (मुखं विदूष्य) कथं हें हें हें हें करोसि । नास्ति ते ज्ञानम् । द्वे कन्ये, तयोः चत्वारः चरणाः भविष्यान्ति न वा ? ज्ञातमिदानीम् ?

टुनटुनः - ओ !! साम्प्रतं ज्ञातम् । मया तु पूर्वं ज्ञातं यद् विडाल्या वा शृगाल्या वा............।

घूटरः - धिङ् मूर्ख ! विडाल्या मनुष्यस्य विवाहः कदापि श्रुतोऽस्ति ?

टुनटुनः - आम्, तात ! यस्य पत्नी न जीवति तस्य विवाहः प्रथमं विडाल्या एव भवति । तात ! किमर्थं चतुष्पद्या कन्यया विवाहं करिष्यसि ? ऐषमः यथास्यात् तथा द्विपदीम् एव त्वदर्थम् आनेष्यामि ।

घूटरः - (टुनटुनस्य शिरसि हस्तं निधाय) चिरंजीव, चिरंजीव ।

टुनटुनः - तात ! त्वया खलु विषयान्तरे प्रवाहितोऽहम् । आर्य-ज्यौतिषिको भगवतः सत्यनारायणस्य पूजां करिष्यति ।

घूटरः - किमर्थम् ?

टुनटुनः - तस्य पुत्रः कृष्णकान्तः बी० ए० परीक्षायां प्रथमोऽभूत् ।

घूटरः - साधु । तर्हि अतीव उत्साहेन पूजा भविष्यति । एहि, तदित आवां सहैव गच्छावः ।

टुनटुनः - इत इतस्तात !

[ उभौ गच्छतः ]

*

## चतुर्थं दृश्यम्

[ अधिवक्ता आसन्दीम् अध्यास्ते। अग्रे फलकोपरि पञ्चषाणि विशालानि पुस्तकानि, कतिचित् पत्रसम्पुटानि, द्वित्राणि दैनिकपत्राणि च राजन्ते। परितः चतस्रो रिक्ताः आसन्द्यः ]

अधिवक्ता—(सिगरेटं पिबन् किमपि विचिन्त्य) लिलि !

[ लिली समागच्छति ]

लिली - तात ! इयमस्मि ।

अधिवक्ता - किं करोषि ?

लिली - न किमपि।

अधि० - कथम् ? नाद्य जगदीशः पाठयितुं समागतः ?

लिली - आगतो नाम, परन्तु त्वरितमेव गतोऽपि।

अधि० - गतवान् ? मत्तः अवकाशम् अनासाद्यैव ?

लिली - अहमेव अवकाशं दत्तवती।

अधि० - त्वमेव अवकाशं दत्तावती ? कियतां दिनानां कृते।

लिली - सर्वेषां दिनानां कृते। (हसति।)

अधि० - किम् , विसर्जितः सः ? कथम् ?

लिली - (मनाक् लज्जाम् अभिनीय) तस्य स्वभावो मे...... ...... ......

अधि ० - साधु कृतम्। अपि अन्यः नियोक्तव्यः ?

लिली - आम् , तात ! अन्यम् एव नियुनक्तु। अयं तु पाठे स्वल्पम् आलापे च अधिकं कालं यापयति स्म ।

अधि० - ( किमपि विचार्य ) लीलि ! जानासि तम् ?

लिली - कम् ?

अधि० - य ऐषमः बी० ए० परीक्षायां प्रथमोऽभूत्। किं नामाऽसौ ?

लिली - कृष्णकान्तः ?

अधि० - आम्।

लिली - जानामि तम्। अपि स स्वीकरिष्यति ?

अधि० - प्रयास: कर्त्तव्य: ।

[तत: प्रविशति ठेङ्गा:]

ठेङ्गा - नमस्कार: ।

अधि० - नमस्कार: । एतु, उपविशतु ।

[ठेङ्गा एकस्याम् आसन्द्याम् उपविशति]

लिली - अस्ति कश्चिद् वादो न्यायालये ?

ठेङ्गा - आम् एवम् ।

लिली - को वादी, कश्च प्रतिवादी ?

ठेङ्गा - (विहस्य) भवती वादिनी, प्रतिवादी च मृग्यते ।

लिली - तात ! कथम् अहं वादिनी ? कस्मिन् वादे ?

अधि० — साम्प्रतं गच्छ पठनाय । वादे प्रवृत्ते स्वत एव सूचनां लप्स्यसे ।

[लिली लज्जाम् अभिनीय गच्छति ।]

अधि० — कथ्यतां ठेङ्गा-बाबू ! का वार्त्ता ?

ठेङ्गा — नास्ति आशा ।

अधि० - किम् ज्यौतिषिक: साक्षादेव प्रस्तावं निरस्तवान् ?

ठेङ्गा - साक्षाद् निरस्तश्चेत् सन्तोषावह एव भवेत् । किन्तु तेन खलु तथा प्रत्युत्तरं दत्तं यथा न कदापि केनचिद् दत्तं भवेत् ।

अधि० — किमाह भवान् ?

ठेङ्गा - किमर्थं श्रीमन्तं श्रावयिष्यामि । श्रुत्वा व्यर्थमेव दुःखमनुभविष्यति भवान् ।

अधि० - तथापि कथ्यतां तावत् ।

ठेङ्गा - ज्यौतिषिक: साभिमानोद्घोषम् अवोचत् - "पुरातन: समयश्चेद् अहं तत्सदृशजनस्पृष्ट - जलेन लघुशङ्कामपि नाऽकरिष्यम्" इति ।

अधि० - ( स्मित्वा ) हुम् ! ज्यौतिषिकेण एवम् अमन्यत यदहं तस्य कुलीनत्वे लुब्धोऽस्मि । कुलीनतां स स्वयमेव क्षालं क्षालं लेढु । वयं तु केवलं वरस्य गुणेषु लुब्धा: स्म: ।

ठेङा - सत्यम्। एतादृशो वरो दुर्लभः। परन्तु, अस्यां स्थितौ को नाम उपायः ?

अधि० - ठेङाबाबू ! भवान् इदानीमेव निराशोऽभूत् ? भवतां प्राचीना विवाह-घटन-परिपाटी साम्प्रतं नैव सफला भवितुमर्हति । विश्वसितु भवान्, इयं कथा अवश्यम्भाविनीति ।

ठेङा - भगवान् तथा करोतु ।

अधि० - ज्यौतिषिकस्य कुलाभिमानोऽपि मर्दितो भविष्यति । (धूमपानं कृत्वा क्षणं विरम्य ) ठेङाबाबू ! भवते एकम् अपरमपि कष्टं दास्यामि ।

ठेङा - कथ्यताम् । अहं समुद्यत एवाऽस्मि ।

अधि० - श्रूयते यत् ज्यौतिषिकस्यः पुत्रो विवाहं न स्वीकरोति । तदर्थमेव च स स्वपुत्रे अप्रसन्नोऽस्ति ।

ठेङा - ओम् ।

अधि० - भवता पुनरपि ज्यौतिषिकस्य गृहं गन्तव्यम् । स च कर्णे एवं मन्त्रयितव्यो यद् 'यदैव भवान् अध्ययन-सम्बल-प्रदानं रुन्ध्यात् तदैव स बाधितः सन् विवाहं स्वीकरिष्यती'ति । कार्यमिदं भवतैव सुकरम् ।

ठेङा - आम्, कार्यमिदं कथं न स्यात् ? अधुनैव गच्छामि ।

अधि० - (पञ्चरूप्यकमितां करगतमुद्रां ददत् ) गृह्यतां तावदिदम् । वास्तविकः पुरस्कारस्तु कार्यसिद्धेरुत्तरं दास्यते ।

[ ठेङाः गच्छति ]

अधि० — लिलि ! ··· ··· —···

[लिली प्रविशति]

लिली - किं तात ! चायम् आनयानि ?

अधि० - चायं पश्चाद् आनेष्यसि । शृणु तावदिदं वचः ।

लिली - किम् ?

अधि० - त्वं छात्रावासं गत्वा कृष्णकान्तं साक्षात्कुरु। निवेदय च तं यद् 'यदि भवन्तः साहाय्यं न करिष्यन्ति तर्हि वयं कन्यकाः शिक्षिताः कथं भवेयुः' ?

लिली—भवान् एव आहूय कथयतु।

अधि० - कथम् ?

लिली - अहं लज्जे।

अधि० - अयि ज्ञानहीने ! एवं लज्जसे चेत् पठिष्यसि कथम्। अस्तु, अहं पत्रमेकं लिखित्वा ददामि। परन्तु तत् स्वयमेव त्वया देयम्।

लिली - ओम्।

**

## पञ्चमं दृश्यम्

[ छात्रावासस्य प्रकोष्ठम्। कृष्णकान्त आसन्द्याम् उपविष्टः पुस्तके दत्तदृष्टिः, शिरः तथा नतं यथा तन्नासिका-पुस्तकयो र्मध्ये प्रादेशार्धमात्रम् अन्तरालः। पत्रमञ्चस्य अपरभागे तिस्र आसन्द्यो रिक्ताः। जगदीशः पृष्ठतः तूष्णीं समागत्य कृष्णकान्तस्य मस्तकं बलाद् अधः करोति, येन तस्य नासिका पुस्तकेन संयुज्यते। ]

कृष्ण० - कोऽयम्, कोयं महामहामूर्खः ? ज्ञातोऽसि, जगदीशः, जगदीशोऽसि। कोऽन्यः स्याद् एवंविधः ? मुञ्च। नासिका पीड्यते। मैवं पीडय।

जगदीशः - पुस्तके एवं नासिकारोपणस्य ते अभ्यासः त्याज्यते। ( एकस्याम् आसन्द्याम् उपविशति। )

कृष्ण० - अद्य त्वं लिलीदेव्या गृहं न गतोऽसि ?

जगदीशः - ( शिरः ताडयित्वा) किं कथयानि, अनर्थोऽभूत् !

कृष्ण० - किं तत् ?

जगदीशः - अध्यापनादस्मि वञ्चितः।

कृष्ण० - कथम् ?

जनदीशः - लिलीदेवी अप्रसन्ना सती मां निष्काशितवती।

कृष्ण० - किं काञ्चन विदायीमपि लब्धवानसि ?

जगदीशः - एवं जीविकाहरणाद् द्वित्राः चपेटिका एव वरमभविष्यत्।

कृष्ण० - रुष्टा कथम् अभूत् ?

जगदीशः - विषयस्तु अतीव तुच्छ आसीत्। लिलीदेवी अवोचत् —श्रीमन् ! भवान् मे मुखं वारं वारं कथं विलोकयति ? ततो मया उक्तम्— अयि, भगवन्तम् उपालभस्व येन तव मुखम् एतादृशंकथं निरमायि।' एतावद् उक्तवति एव मयि सा पुस्तकं क्षिप्त्वा मम पुरतः पलायिता, दास्या च सन्देशं प्रैषयत्--अद्य-प्रभृति कदापि मम द्वारं मा आगम्यतामिति।

कृष्ण - ननु तेन का ते चिन्ता ? कुशलोऽसि। एकस्यां सारिकायाम् उत्पत्तिनायां पुनरपरां स्वकौशलेन निग्रहिष्यसि।

जगदीशः - स्यादेवम् । किन्तु इशं वराकी माम् आकाशम् आरोह्य पाताले क्षिप्तवती ।

[ लिली समागच्छति । जगदीशं विलोक्य द्वारे एव तिष्ठति । ]

जगदीशः – अयि, लिलीदेवि ! (ससम्भ्रमम् उत्थाय) एहि ।

कृष्णकान्तः (उत्थाय विलोक्य) आगम्यताम्, उपविश्यताम् ।

[ सर्वे उपविशन्ति ]

जगदीशः—इयं बाबू-विश्वम्भरचौधरीमहोदयस्य अधिवक्तुः सुपुत्री कुमारी लिली देवी ।

कृष्णकान्तः - नमस्कारः ।

लिली –नमस्कारः ।

जगदीशः - अयं च मे मित्रम्… … … … … … … … …

लिली - भवता व्यर्थमेव कष्टं न कार्यम् । अहं स्वयम् एनं परिचिनोमि । अपि अस्मिन्नेव प्रकोष्ठे भवतोऽपि निवासोऽस्ति ?

जगदीशः - नहि, अहं २० संख्यके प्रकोष्ठे तिष्ठामि ।

कृष्ण० - शतचतुष्टयं कथं न्यूनीकृतवान् असि ?

लिली - तर्हि कथं पश्यामि अस्मिन्नेव प्रकोष्ठे ?

जगदीशः - मदुपस्थितिः अवाञ्छिता चेद् अहं गच्छामि ।

लिली - मा मैवम् । तथा न मेऽभिप्रायः । भवता स्थातुं शक्यते । नास्ति काऽपि गोपनीयता । केवलमेकं पत्रं दातव्यम् अस्ति । (पत्रम् आदाय कृष्णकान्ताय अर्पयति । )

कृष्ण० - (पत्रं गृहीत्वा) अलम् एतदर्थं भवत्याः स्वीयाऽऽगमन-कष्टेन । इदं तु दासेनापि प्रेषयितुं शक्यम् ।

लिली - पितृचरणेन उक्तम् स्वयमेव गत्वा देहीति ।

कृष्ण० - (पत्रं पठित्वा पटलोपरि स्थापयन्) अस्तु, अहम् अधिवक्तृमहोदयस्य दर्शनम् अद्यैव करिष्यामि ।

लिली - वयं साय भवन्तं प्रतीक्षिष्यामहे ।

कृष्ण० - ओम् । अहं सप्तवादनं यावद् आगमिष्यामि ।

लिली - साम्प्रतम् अनुजानातु माम् । पितृचरणं सन्देशमिमं शीघ्रमेव प्रापया-
मि । स भवन्तं साक्षात्कृत्य अतिप्रसन्नो भविष्यति ।

[ सर्वे उत्तिष्ठन्ति ]

जगदीशः - हन्त ! लिलीदेवि ! त्वरितमेव प्रस्थिता भवती । धर्कटोऽसौ
चाय-ताम्बूलादिभिः सत्कारस्य चर्चामपि नाकरोत् । क्षणं मत्प्रको-
ष्ठमपि आयातु ।

लिली - अहं भवत आतिथ्यं ग्रहीतुं न आगताऽस्मि ।

जगदीशः - तर्हि अहम् आतिथ्य-सौभाग्याद् वञ्चित एव भविष्यामि किम ।

लिली - अलम् आग्रहेण ।

जगदीश - लिलीदेवि ! इयती कठोरा मा भूः ।

कृष्ण०—जगदीश ! मौनमवलम्बस्व ।

( लिली गच्छति )

कृष्ण०—त्वं महान् धृष्टोऽसि । काऽपि दुर्दान्ता तरुणी चेत् तत्क्षणमेव
पादत्राणमादाय तव शिरः पीडयेत् ।

जगदीशः - किम् , एनां त्वम् अल्पां दुर्दान्तां मन्यसे ? इयम् अन्तरतो
दुर्दान्ता , अन्तरतः । किं न दृष्टं त्वया ? कथं सगर्वम् आलपति
स्म । ( अलक्षित एव पटलात् पत्रम् आदाय ) अये ! पत्रं किं
विषयकम् आसीत् ?

कृष्ण० त्वं मूर्खोऽसि । त्वां न कथयिष्यामि ।

जगदीशः - न कथयिष्यसि ?

कृष्ण - न कथयिष्यामि , नैव कथयिष्यामि ।

जगदीशः - अये , त्वम् आत्मानं महान्तं चतुरं मन्यसे । परन्तु , पत्रं
क्वाऽस्तीति जानासि ?

कृष्ण० - अयि ! ( इतस्ततोऽन्विष्य ) अत्रैव तु आसीत् । त्वमेव चोरि-
तवान् असि । मन्ये त्वं मम कार्यं विघटयिष्यसि ।

जगदीशः - भ्रान्तोऽसि त्वम् । मया आशङ्कितं यदियं शृङ्गी बकस्य
चञ्चो निर्गता कस्यापि धीवरस्य जाले पतेदिति । किन्तु भग-
वता रक्षिता सा कूर्दं कूर्दं ब्रह्मचारिणः कमण्डलौ निपतिता ।

## षष्ठं दृश्यम्

[ द्वारगृहे शतरञ्जी-समास्तृतायां चतुष्पादिकायां फलाहारी अन्ये च त्रिचतुरा जनाः समुपविष्टा. । अधस्तात् टुनटुनः समुपविष्टः । चतुष्पादिकान्तरे कम्बलम् आस्तीर्णम्, तदुपरि ज्यौतिषिक एकाकी एव चिन्तानिमग्नः समुपविष्टः ]

फलाहारी - ज्यौतिषिक ! इदानीम् अस्याऽपि रेलयानस्य समयो व्यत्येति।

ज्यौतिषी - भवता चिन्ता न कार्या। मया तादृशस्य महास्त्रस्य प्रयोगः कृतो यः कथमपि विफलो न भवेत्। प्रतीक्षताम्, क्षणेनैव स आयाति।

टुनटुनः - (उत्थाय, शिर उन्नम्य, विलोक्य) अहो ! अयं वत्सः कृष्णः नाम्नि कीर्त्तिते एव सद्यः समुपस्थितः।

फलाहारी - चिरजीवी भविष्यति।

[ कृष्णकान्तो लघुमञ्जूषा-हस्तः समागच्छति । सर्वे उत्तिष्ठन्ति । ]

कृष्ण० - (ज्यौतिषिकं बाहुग्राहं प्रगृह्य उपवेशयन्) तात ! मा, मा उत्तिष्ठतु। भवान् अस्वस्थः। (प्रणमति)।

ज्यौ० - शुभानि भूयासुः।

अन्ये - नमस्काराः।

कृष्ण० - नमस्काराः। तात ! साम्प्रतं कीदृशोऽस्ति भवान् ?

ज्यौ० - स्वस्थ एवाऽस्मि।

कृष्ण० - किमभूद् अकुशलं भवतः ?

ज्यौ० - प्रथमम् उपविश। कथयामि निर्व्यग्रम्।

[ सर्वे यथास्थानं समुपविशन्ति ]

फलाहारी - भवान् क्षुधितः पिपासितश्च भवेत्। प्रथमं स्नानादि कृत्वा किमपि जलपानं करोतु।

कृष्ण० - ओम्। एवं करिष्यामि। प्रथमं जानामि यत् किम् अकुशलमभूत् पितुरिति।

ज्यौ० – अस्माकं किमपि अकुशलं चेत् तद् भाग्यमेव मन्तव्यम् ।
यूयं कुशलाः तिष्ठत इत्येव कामयामहे ।

कृष्ण० - तात ! ननु अहं पृच्छामि भवतः किमकुशलमभूदिति ।

ज्यौ० - मम किं भविष्यति ?

कृष्ण० - न किमपि ?

ज्यौ० - न किमपि ।

कृष्ण० - तर्हि इदं तारपत्रम् ( वस्त्रकोषाद् बहिष्कृत्य प्रदर्शयन् ) मिथ्यैव गतम् आसीत् ?

[ क्षणं सर्वे तूष्णीं तिष्ठन्ति ]

कृष्ण० - तात ! कथं नोत्तरयसि ? सर्वे तूष्णीं कथं सन्ति ? मया तु कोऽप्यर्थ एव न लक्ष्यते। भवान् अत्र केन सम्बन्धेन अस्ति ? अयं कोऽस्ति ? किम् ? मद्दर्शनार्थम् एता महिलाः कथम् एकत्रीभूताः सन्ति ? प्राङ्गणे गीतं किन्निमित्तं प्रारब्धम् ?

[एको बटुः वंशपात्रे रक्तधौतवस्त्रयुगलम् , उष्णीषम् , उत्तरीयवस्त्रं , पूगीताम्बूलानि च आदाय समागच्छति । ]

बटुः – ( कृष्णकान्ताय वंशपात्रं समुपहरन् ) अधुना कोटं पेंटं च विमुच्य इदं रक्तधौतवस्त्रं परिधेहि ।

कृष्ण० – कथम् ?

बटुः - (हसन्) हें हें हें । मन्ये , जानन्नपि न जानासि त्वम् । भोः ! विवाहं न करिष्यसि ?

कृष्ण० – किम् मम विवाहस्य समारम्भो भवति ?

बटुः - परिधेहि नाम । विलम्बं मा कुरु ।

ज्यौ० - वत्स ! यथार्थं कथयति एष बटुः । अतः परं विलम्बं मा कुरु ।

कृष्ण० - तात ! कीदृशी इयं लीला क्रियते भवता ?

ज्यौ० - वत्स ! यत् क्रियते तत् तवैव कल्याणाय ।

कृष्ण० - भवान् स्वमतो अवश्यं मम कल्याणं करोति किन्तु , यथार्थतः मम

गले मृत्युपाशं बध्नाति । मम उज्ज्वलं भविष्यं स्वकुठारेण छिनत्ति ।

फलाहारी - ननु किञ्चित् श्रूयतां तावत् । भवान् मम कन्यायाः गुणदोषम् अविज्ञायैव तां गलस्य पाशं कथम् अमन्यत ?

कृष्ण० यदि स्वकन्यायाः गुणे भवतः एतावान् विश्वासः तर्हि एवं वञ्चना कथं कृता ?

ज्यौ० - इयं वञ्चना, वत्स ! मया कृता, नाऽनेन महाशयेन कृता । ईदृशी गुणवती कन्या अन्यत्र कुत्रापि दुर्लभा ।

कृष्ण० - भवतां चक्षुः वार्द्धक्यवशाद् विकृतमभूत् । अत एव तां गुणवतीं पश्यन्ति भवन्तः । मम नेत्रे तु मिथिलायाः सर्वैव कन्या गलगण्डरूपा ।

ज्यौ० - शिव शिव !! वत्स, ईदृशी कथा न वाच्या । यदि कन्या शृणोति तर्हि सा व्यथिता भविष्यति ।

कृष्ण - हुँः, व्यथिता भविष्यति ! यदि मिथिलायाः कन्या स्वाऽयोग्यतायां, स्वाऽकर्मण्यतायां, स्वनिर्बलतायां वा मनागपि व्यथिता अभविष्यत्, मनागपि ग्लानिम् अभजिष्यत तर्हि तस्या अञ्चलम् आजीवनम् अश्रुवारिणा क्लिन्नं नाऽभविष्यत् । या महिला वर्तमाने युगे द्वाराद् बहिः चरणौ न सारयेत्, एकामपि कपर्दिकां नार्जयति, सा यदि पङ्गवी कथ्येत, अकर्मण्या कथ्येत, मूकी कथ्येत, गोमय-मूर्त्ति वा कथ्येत, तत् कदापि नानुचितं भवेत् ।

ज्यौ० - वत्स ! सकलां कन्यां एकयैव विधया मा भर्त्सय । इयं कन्या शिक्षिताप्यस्ति ।

कृष्ण० - अस्ति भवतः कन्या शिक्षिता ? तर्हि मत्समक्षम् आगच्छतु सा, अहं किमपि प्रष्टुकामोऽस्मि ।

फलाहारी - भवान विक्षिप्तो जातः किम् ?

कृष्ण० - नाहं विक्षिप्तः । विक्षिप्तस्तु भवान् यः स्वकन्यां बलात् कस्यापि गले

निक्षेप्तुम् इच्छति। यदि कन्या शिक्षिता, तर्हि तां गृहकोणे गुप्तां कथं स्थापयति ?

क्षट: - भो: ! भवान् किं ज्ञास्यति । मम भगिनी सम्पूर्णां गुणन-पाटीं जानाति ।

कृष्ण० - धन्या भवतां बुद्धि: । सम्पूर्णां गुणन-पाटीं रटित्वैव महाविदुषीति प्रथिता । क्षम्यतां भो:! कृपया कस्याप्यन्यस्य यूनो गल: अन्विष्यताम् । मम गल: पाशेऽस्मिन् न निबद्धो भवितुमर्हति । ( प्रतिष्ठते ) ।

ज्यौ०—(सक्रोधं साधिकारं च ) वत्स !

कृष्ण० - (विरम्य) किम् ?

ज्यौ० - जानासि ? अहं कोऽस्मि ते ?

कृष्ण - जानामि । भवान् मे पिता ।

ज्यौ० - यदा च माता षाण्मासिकं त्वां विहाय स्वर्गता तदा अङ्के निधाय क: अपालयत् त्वाम् ?

कृष्ण० - भवानेव ।

ज्यौ० - निजोदरमात्राद अन्नात् च किञ्चत् किञ्चिद् उद्धृत्य ग्रामे ग्रामे भिक्षां च अटन् एतावत् पर्यन्तं क: अपाठयत् त्वाम् ?

कृष्ण० —ननु भवानेव ।

ज्यौ० - तं प्रति च तव एतदेव कर्त्तव्यम् ?

कृष्ण० - तात ! भवान् मे मुण्डं याचताम् , तदहं सद्यो ददामि । परन्तु...... ...

ज्यौ० - परन्तु, परन्तु जानासि ? एतस्य 'परन्तु' इत्यस्य कीदृश: परिणामो भविष्यति ? वृद्धस्य पितु र्जीवनस्य मोहो न भवेत् चेद् मा भवतु, परन्तु एतस्या: कन्याया: का गति र्भविष्यतीति तु चिन्तय !

फलाहारी - (कृष्णकान्तस्य चरणौ गृह्णन्निव) रक्ष्यतां रक्ष्यतां मम उष्णीषस्य मर्यादा । रक्ष्यतां रक्ष्यतां मम वंशस्य लज्जा, नो चेदहं समाजे मुख-प्रदर्शनयोग्यो न भवामि । पादौ गृहीत्वा भूयो भूय: प्रार्थये ।

(कृष्णकान्तो मौनं तिष्ठति । )

ज्यौ० - वत्स ! तूष्णीं कथमसि ? कथ्यताम् 'आम्' इति । मनाक् 'आम्' इति

कथ्यताम्। नो चेद् अनेनैव शोकेन अहं प्राणांस्त्यक्ष्यामि। त्वं च पितृवधभाग् भविष्यसि, पितृवधभाक् !! वद, ननु वद। किं वृणुषे विवाहं, पितृवधं वा ?

कृष्ण० - ( सहसा भूमौ उपविश्य ) अहो ! भवन्तो मम हृदये दारुणां वात्याम् असृजन्। घूर्णते मम शिरः। नाऽस्म्यहं प्रकृतिस्थः। अस्यां विक्षोभावस्थायाम्, ईदृश्यां व्यामोहावस्थायाम् अहं कस्या अपि हस्तं न ग्रहीतुं शक्नोमि ! मम हस्तौ प्रकम्पतः। यदि भवान् तथापि बलात् कस्या अपि हस्तं मम हस्ते अर्पयिष्यति, तर्हि अहं तं हस्तं ग्रहीतुं न पारयिष्यामि। अनुजानातु गन्तुम्, मां गन्तुम् अनुजानातु !!

(उत्थाय कम्पमानः सत्वरं प्रतिष्ठते।)

ज्यौ० - वत्स !

फलाहारी - हा भगवन् ! अनर्थोऽभूत् !

ज्यौ०- वत्स ! ... वत्स !! ... वत्स !!

[कृष्णकान्तो गच्छति। ज्यौतिषिको मोहमुपगच्छति ]

×

## सप्तमं दृश्यम्

( सायं समयः । ज्यौतिषिकस्य द्वारगृहम् । धूमायितः प्रदीपः छदिप्रान्ते अवलम्बितः । ज्यौतिषिको विषादमुद्रायाम् उपविष्टः । घूटर आगच्छति । )

घूटरः - भ्रात ज्यौतिषिक ! वर्जय स्वीयं भृत्यम् । नो चेत् पश्चाद् मयि दोषक्षेपं मा कार्षीः । पादमेव भङ्क्षयामि ।

ज्यौ० - भोः ! किमभूत् ?

घूटरः - ननु पश्यतु भवान् । भृत्यो भूत्वाऽयं मामुपहसति । किम् अहं तस्य परिहासभाजनम् ? आहूय पृच्छतु भवान् ; स मां कुतः कोपयति ।

ज्यौ० - टुनटुन, टुनटुनोऽसि रे !!

घूटरः - कुतो नायासि ? एहि साम्प्रतं समक्षम् ।

(नेपथ्यात् टुनटुनः- "अयमागतोऽस्म्यार्य" इत्युक्त्वा आगच्छति ।)

टुनटुनः - तात, पङ्गुक ! प्रणमामि ।

घूटरः - पश्यति भवान् अस्य शठत्वम् ?

ज्यौ० - चिराद् निवारितोऽपि त्वं न जहासि दुर्वृत्तिमिमाम् । घूटरककेति कथने जिह्वा ज्वलति किम् ?

टुनटुनः - आर्य ! किमर्थम् आहूतोऽस्मि ?

ज्यौ० - घूटरबाबूः त्वाम् उपालभते; त्वम् एनं सततं कोपयसि इति । अवेहि ! अद्यप्रभृति यदि पुनः एवम् अस्योपहासं करिष्यसि तर्हि मद्भृत्यपदे न स्थास्यसि । कार्ये मनो न रमते ते, सर्वमेव दिवसं च अस्यामेव लीलायां गतार्थयसि । गच्छ, घासमाहर ।

टुनटुनः - यथाज्ञापयति भवान् । (मुखं विदूष्य गच्छति ।)

घूटरः - भ्रात ज्यौतिषिक ! अपि शुद्धः समयो व्यतीतः ?

ज्यौ० - आम् , व्यतीतः ।

घूटरः - तर्हि पुनः परुत् एव ?

ज्यौ० - न परुत् अपि । महातिचारो भविष्यति ।

घूटरः - टुनटुनः कथयति यद् द्वे लग्नदिने अवशिष्टे स्तः ।

ज्यौ० - धिङ् मूर्ख ! टुनटुनमा कदा ज्योतिषमपठत् !

घूटरः - तर्हि वत्सस्य कृष्णकान्तस्य विवाह ऐषमः नाऽभूत् ?

ज्यौ० - ईश्वरस्य इच्छा ।

घूटरः - अपि एका वार्ता श्रुता भवता ? यया कन्यया वत्सकृष्णकान्तस्य विवाहो निश्चित आसीत्, सा रात्रौ पलायिता । न क्वापि उपलभ्यते ।

ज्यौ० - किमुक्तम् ? पलायिता सा ?

घूटरः - आम् । तस्य अङ्गने क्रन्दनं श्रूयते स्म ।

ज्यौ० - हा भगवन् ! किमिद कृतम् ? अनर्थोऽभूत् । सा वराकी अपमानं सोढुं नाऽभूत् समर्था । सा ग्लानिवशाद् धूमयानेन वा, जलेन वा विषेण वा आत्मानं व्यापादयिष्यति । अहमेव च तस्याः वधभागी भविष्यामि ! स्त्रीवधः ! स्त्रीवधः !! कीदृशो भीषणः पापः !! हा भगवन् ! हा ईश्वर ! पाहि ताम्, पाहि ताम्, त्रायस्व मां, त्रायस्व माम् अस्माद् महापातकात् । वत्स ! त्वत्ता अवमानिता सती सा नद्यां निमज्जति । गृहाण तस्याः करम् । इदानीमपि ताम् उद्धर । त्रायस्व मां स्त्रीवध महापातकात् ( इति पतति । )

घूटरः - (उत्थापयन् ) ज्यौतिषिकभ्रातः ! ज्यौतिषिकभ्रातः !! किम् अभूद् भवतः । उत्तिष्ठतु ।

ज्यौ० - (उत्थाय) न किमप्यभूत् । चित्तं तिमिरावृतमिव अभवत् । घूटर ! गृहप्राङ्गणमिदं रक्षणीयं त्वया । यदि कदापि वत्सः समायाति तर्हि तस्मै समर्पणीयम् । यदि स च मम अन्वेषणं करोति तर्हि स सूचनीयः ...... ...

घूटरः - ज्यौतिषिक भ्रातः ! किमिदमुच्यते ?

ज्यौ० - शृणु यत् कथयामि । तर्हि सूचनीयो यत् स पञ्चत्वं गतः । (प्रतिष्ठते । )

घूटरः— क्व गच्छति भवान् ?

ज्यौ० —यात्राकाले मा पृच्छ । कथय, जय गणेश, जय गणेश, जय मातः कालिके ! (सहसा सत्वरं निर्गच्छति । )

घूटरः - ज्यौतिषिक भ्रातः, ज्यौतिषिक भ्रातः ! हा धिक् ! गत एव। क्व गत इत्यपि न प्रकटितवान्। कीदृशो मूर्खोऽस्म्यहम्। न तां वार्ताम् अश्रावयिष्यम, न वा स एवं विक्षिप्तोऽभविष्यत्। यदि विचार्य पश्यामि नात्र मम कोऽपि अपराधः। कन्या फलायिता कस्यापि अन्यस्य, तस्या अनुगमने च विक्षिप्तोऽभूद् अयम्। अयमपि विक्षिप्तप्राय एव।

[ फलाहारी त्वरमाणः शोकोद्विग्नः समागच्छति। ]

फलाहारी - ज्यौतिषिक ! ज्यौतिषिक !! अनर्थोऽभूत्। मम पुष्पा रात्रौ क्वापि पलायिता। ज्यौतिषिक ! क्वासि ?

घूटरः - ज्यौतिषिकभ्राता तु इदानीमेव क्वापि प्रस्थितः।

फलाहारी - क्व प्रस्थितः स ?

घूटरः - क्व गत इति न प्रकटीकृतं तेन।

फलाहारी - मम पुत्री पलायितेति तेन ज्ञातं किम् ?

घूटरः - ननु तदेव श्रुत्वा स सत्वरं प्रस्थितः।

फलाहारी - कस्यां दिशि प्रस्थितः ?

घूटरः - तद् अन्धकारे न दृष्टम्।

फलाहारी - अहो अनर्थपरम्परा ! प्रथमं पुष्पाया जीवनं, तदनु चाऽस्य वृद्धब्राह्मणस्य जीवनम् !! ज्यौतिषिक ! अलं भवतः प्राणपात-प्रस्थानेन। मम पुष्पा न प्राप्स्यते, न क्वाऽपि प्राप्स्यते। सा न द्यां निमग्ना भवेत्, सा धूमयानेन च्छिन्ना भवेत्, चालकैः सा धूमयान-महाचुल्लौ क्षिप्ता भवेत् ! निवर्तताम्। ज्यौतिषिक ! निवर्तताम्।

★

## अष्टमं दृश्यम्

[सायं समयः। लिलीदेव्याः अध्ययनकक्षः। दीर्घं पुस्तकपटलम्। तदुभयतः आसन्द्यः। पटले कतिचन पुस्तकानि प्रसारितानि। एकस्याम् आसन्द्यां कृष्णकान्तः उपविष्टः पुस्तकं पठन्--]

कृष्ण॰ - खञ्जनिके! खञ्जनिके! कुत्रासि।

[ खञ्जनिका आगच्छति ]

खञ्जनिका - अहो! भवानपि अतिवर्तते। क्षणमात्रे विलम्बे एतावद् वैकल्यम्!

कृष्ण॰ - तूष्णीं भव। एवं यत्तन्मा भण। शीघ्रं प्रेषय ताम्।

खञ्जनिका - (पटलादिकम् अञ्चलेन परिमार्जयन्ती) किमेवमुत्कण्ठो भवान्। आयात्येव। (क्षणं विरम्य) शिक्षकवर! इच्छामि किञ्चित् प्रष्टुम्।

कृष्ण॰ - पृच्छ।

खञ्जनिका - भवता उच्यते यद् विवाहं न करिष्य इति। आजीवनं कुमार एव स्थास्यति किम्?

कृष्ण॰ - हुम्।

खञ्जनिका - आश्चर्यम्! न क्वापि एवं दृष्टम्।

कृष्ण॰ - तर्हि साम्प्रतं पश्य।

खञ्जनिका - भोः! किं पश्यामि। अहं सर्वं जाने। वचसि विरागः, चित्ते रागः।

[ लिली चायभाजनम् आदाय आयाति ]

लिली - किं निरर्थकं प्रलपसि। सम्पन्नं परिमार्जनम्। गच्छ इदानीम्।

[ खञ्जनिका प्रस्थिता ]

कृष्ण॰ - किम् इदम् उद्वहन्ती समायाताऽसि?

लिली - इदं कवयीमत्स्यस्य झोलम्। (पटले चायभाजनानि न्यस्यन्ती) अद्य भवतः कण्ठी भङ्क्षयते।

कृष्ण० - यथाज्ञापयति भवती। भवत्याः लवणं खादामि, तेन सेवक एव भवामि। सर्वोऽप्यादेशः शिरोधार्यः।

लिली—ननु लवणं भवान् तातस्य खादति, तेन तस्य सेवको भवितुमर्हति, मम तु स्वाम्येव (जिह्वां विकुञ्च्य) एँ! मान्य एव। (चषके चायं दत्त्वा) गृह्णातु तावत्।

कृष्ण०- जानास्येव त्वम्। नाहं पिवामि।

लिली - केवलम् अद्यैव पिबतु। सकृत् पानाद् व्रतभङ्गो न भवेत्।

कृष्ण०- ननु उक्तमेव, नाहं पास्यामि।

लिली - कुतः ?

कृष्ण०- मम जीननं त्वया विलासेन योज्यते।

लिली - ओ! भवते संन्यासजीवनं रोचते, न विलास-जीवनम्। काषायं वस्त्रं मृग्यते किम् ?

कृष्ण०- न वस्त्रं काषायं मृग्यते, ननु हृदयं काषायम् इच्छामि।

लिली—अहो! तर्हि अवश्यमेव चायमिदं पातव्यम्। यदैव इदं कण्ठाद् अधः अवतरति तदैव हृदयं विशुद्धं काषायवर्णं भवति। दृश्यताम्, कीदृशं विलक्षणं रङ्गं राजते अस्याः चायपत्र्याः ? गृह्णातु, पिवतु।

कृष्ण०- उक्तमेव पूर्वम्। नाहं पास्यामि चायम्।

लिली—चायं न पास्यति तर्हि बलात् क्वाथं पास्यति ? (चषकं गृहीत्वा बलात् पाययितुं प्रवर्त्तते)।

कृष्ण०- हाँ हाँ हाँ! मुखं धक्ष्यति। एतावान् हठश्चेत् तर्हि देहि, अहं स्वयमेव पिबामि।

लिली - मम हस्तेनैव पाने का क्षतिः ?

कृष्ण०- (मकाक् पीत्वा) अवहिता भव! अधिकर्तृमहोदयः! (लिल्याः हस्तात् चषकम् आदाय पिबति)।

(लिली पुस्तकमेकम् उद्घाट्य संयतात्मा समुपविशति। अधिकर्तृमहोदय आयाति।)

लिली—तात ! पश्यतु लीलाम्, वैष्णवाचार्योऽयं कवयीमत्स्यस्य झोलं कथं स्वादं स्वादं चोषं चोषं च पिबति ।

अधिवक्ता—किम्, सदा एवमेव करोषि, उत यत्किञ्चित् पठनादिकमपि ?

लिली - अध्ययनपरैव आसम् । 'तातल सैकत' । 'तातल सैकत वारिबिन्दु-सम' । 'तातल सैकत' । किं नाम तातलं शिक्षकवर !

[ अधिवक्तृमहोदयो याति ]

कृष्ण०—तातलं नाम इदं चायम् ।

लिली—उँह, अलं परिहासेन ।

कृष्ण०—यथार्थमेव कथयामि । तातलं नाम तप्तम । चायमिदं तप्तम् । अतः तातलं चायम् । तप्तसैकते जलबिन्दुरिव पुत्र-मित्र रमण्यादयः स्वजना इत्यर्थः ।

लिली—(चाषकं विलोक्य) अहो ! किं न पीतं भवता ? (रुष्टेव) मम एकमपि वचनं भवता न मन्यते ।

कृष्ण०—मम वचनं त्वया मन्यते किम् ?

लिली—कथयतु कदा न मन्ये ?

कृष्ण०- स्मरसि, तद्दिने गानाय प्रार्थिता... ... ... ...।

लिली—अद्य गायामि चेद् भवता चायं पास्यते ?

कृष्ण०- आम्, पास्यामि । गायतु भवती ।

[ लिली गायति, कृष्णकान्तश्च चायं पिबति ]

लिली - प्रातः सखि ! शून्यं मे भवनम् ।
सनन-सनन्-सन्-प्रवहत्पवनम् ॥
तेन च कुचयुगलं मे पीनम् ।
कृतमपदे द्रुतमञ्चल-हीनम् ॥
निभृतं कश्चिदेत्य मे गेहम् ।
निद्रागतमलसं मे देहम् ॥
स्पृष्ट्वा झटिति कुतश्चिद् यातः ।
सनन्-सनन् प्रवहति सखि ! वातः ॥
स्वतो लज्जया पिहितं देहम् ।
कदलीदलमिव सखि कम्पेऽहम् ॥
आलि ! पश्य शून्यं मे भवनम् ।
सनन्-सनन् प्रवहन्तं पवनम् ॥

★

## नवम दृश्यम्

[ लिलीदेव्याः अध्ययनकक्षः । दीर्घं पटलम्, परित आसन्द्यः । कृष्णकान्तः पलायितुम् उद्यतः, लिली च तं रोधयन्ती ]

कृष्ण० लिलीदेवि ! अनुजानीहि माम् । नाहं स्थातुं शक्नोमि । तातः पलायितः। नाहं तम् उपेक्षितुं शक्नोमि। यत्र क्वापि स प्राप्स्यते, तत एवाऽन्विष्य तमानेष्यामि। यथा प्रसन्नो भविष्यति तथाकृत्वा तं निवर्त्तयिष्यामि।

लिली—अयं हि तातः समुपस्थितः।

कृष्ण०—(प्रसन्नो भूत्वा) किम्, तात ! क्वासि, तात ! क्वासि ?

लिली—न भवतः तातः, मम तातः समागच्छति।

[ अधिवक्ता समागच्छति ]

कृष्ण०—अधिवक्तृमहोदय ! अहं गच्छामि तातस्य अन्वेषणाय। यावत् स नोपलप्स्यते तावन्नाहं निवर्त्स्ये। अनुजानातु माम्।

अधिवक्ता—कृष्णकान्तबाबू ! एवं धैर्यच्युतो मा भवतु। प्रकृतिस्थो भूत्वा किञ्चिद् विचिन्तयतु यदेवं स्थितौ किं करणीयमिति। शान्तः सन् उपविशतु।

कृष्ण०–यावत् तातो न लभ्यते तावत् कथं शान्तिः ?

अधि०—एवम् अशान्त-चेतसा यत्र तत्र वृथा भ्रमणेन पिता प्राप्स्यते किम् ?

कृष्ण०- कोऽन्य उपायः ?

अधि०- बहव उपायाः कर्त्तुं शक्यन्ते। प्रथमम् उपविशतु। ततः कथयामि। लिलि ! उपवेशय एनं बाहुग्राहम्।

[ सर्वे आसन्द्याम् उपविशन्ति ]

अधि०- अस्तु, प्रथमं मम प्रश्नस्यैकस्य उत्तरं ददातु नाम। अहं भवतः शत्रुर्वा मित्रं वा ?

कृष्ण०- मित्रम्।

अधि०- अपि अहं भवतः अकल्याणं चिन्तयितुं शक्नोमि ?

कृष्ण०- न कदापि।

कृष्ण०—तर्हि पिता मया नाऽन्वेषणीय इत्येव भवतो मतं किम् ?

अधि० - न तन्मे मतम्। परन्तु, प्रथमम् अन्वेषणस्य किञ्चन वर्त्म निर्धार्यम्। भवान् भूगोलज्ञः, अपि जानाति—दरभङ्गा-मण्डलं कियत्प्रमाणम् अस्ति, मिथिला कियत्प्रमाणा, भारतं कियत्प्रमाणं, संसारश्च कियत्प्रमाणः ? एकाकी भवान् क्व क्व यास्यति ?

कृष्ण० - किं तर्हि कर्त्तव्यमुपदिश्यते भवता ?

अधि०—ननु तदेव कथयामि। तादृश उपायः कर्त्तव्यो येन गृहस्थिता एव वयं तस्य अवस्थितिं जानीमः।

कृष्ण० - कः स उपायः ?

अधि० - सैनिकविभागे सूचना दातव्या। तेन यत्र क्वापि स भवेत्, तस्य सूचना लप्स्यते।

कृष्ण - अम्, शक्यमिदम्।

अधि०—नैतदेव, अन्येऽपि बहव उपायाः शक्याः। प्रथमं समाश्वसितु भवान् पृच्छामि तावद् भवन्तम्। किमेतत् सत्यं यद् भवतः पिता भवतो विवाहम् अकामयत ?

कृष्ण०—ओम् श्रीमन् !

अधि०—तर्हि एतदपि सम्भाव्यते यद् यदि भवान् विवाहाय समुद्यतो भवति तर्हि स प्रसन्नचित्तः स्वयमेव गृह प्रत्यावर्तेत।

कृष्ण० - मम विवाहेन पिता गृहं प्रत्यावर्त्तेत चेत् तर्हि साम्प्रतम् अहं विवाहमपि कर्त्तुमुद्यतोऽस्मि। अधिवक्तृमहोदय, तस्याः वराक्याः स्मरणमात्रेणैव मम हृदये वज्रनिपातो भवति। आह ! सा कीदृशी मनस्विनी आसीत्, या जीवितार्पणेनापि स्वावमाननां प्रतिचकार। लिलीदेवि ! अहम् इमाम् एव मनस्वितां, इमम् एव आत्माऽभिमान, इमाम् एव प्रढ़तां मिथिलायाः सकलासु नारीषु दिदृक्षुरस्मि।

अधि०—पुन र्भवान् विचाराद् भ्रंशते। यदि भवान् विवाहं कर्त्तुं समुद्यतोऽस्ति तर्हि भवतः पिता नूनं प्रत्यावर्त्तेते।

कृष्ण० — अहं समुद्यतोऽस्मि विवाहाय। परन्तु, तातेनेदं कथं ज्ञास्यते ?

अधि० - भवान् तमुद्दिश्य पत्रं लिखतु यदहं विवाहं करिष्य इति।

कृष्ण० - ननु पत्रमिदं तातेन कथं प्राप्स्यते ?

अधि० - भारतस्य प्रसिद्धेषु समाचारपत्रेषु मुद्रापयिष्यते। स यत्रैव स्यात् तत्रैवोपलब्धं स्यात पत्रमिदम्।

कृष्ण० - हुँ। (क्षणं मौनमाश्रयते।)

अधि० - अतःपरं कस्यां चिन्तायां निमग्नो भवान् ?

कृष्ण० - अधिवक्तृमहोदय! अयम् उपायस्तु तातप्राप्तेः अभूत्। सा तु बालिका ?

अधि०- तस्या अपि वार्ता प्रसार्यते। कतिपयै दिनैः सर्वेषां स्थिति र्ज्ञाता स्यात्। साम्प्रतं चिन्ताऽपगता न वा ?

कृष्ण०- आम्।

अधि०- अतःपरमपि पलायितुम् उपक्रमसे ?

कृष्ण०- नहि। नाऽतः पलायिष्ये।

लिली - कथमेवं विश्वासः कार्यः ?

अधि०- साम्प्रतं विश्वसिहि। तथापि सावधानेन वर्तितव्यम्। अहं गच्छामि।

[ अधिवक्ता गच्छति। क्षणं सर्वे तूष्णीं तिष्ठन्ति। ]

लिली- अध्यापकवर! (उत्तरम् अनासाद्य कियत्कालानन्तरं पुनः) अध्यापकवर! कस्यां चिन्तायां निमग्नोऽसि ?

कृष्ण०- लिलिदेवि! सा जले निमज्जन्ती आसीत्। यदि अहं तस्याः पाणिम् अग्रहीष्यम्।

लिली- गृह्णातु नाम। जीवत्येव हि सा।

कृष्ण०- (प्रसन्नो भूत्वा) क्व ?

लिली - तव मनसि।

कृष्ण०- (सक्रोधम्) लिलि!

[ मुखपटो निपतति ]

-: ★ :-

## द्वितीयोऽङ्कः

### तत्र प्रथमं दृश्यम्

[सायं समयः, ज्यौतिषिकस्य बहि र्गृहम् । वलीके धूमिलः प्रदीपो लम्बमानः । घूटरः चतुष्पादिकायाम् उपविष्टः तमाल त्रं मर्दयति । ]

घूटरः - वर्षत्रयं व्यतीतम् । न ज्यौतिषिकभ्रातुः उदन्तोऽवगम्यते, न वा कृष्णकान्तस्य । ज्यौतिषिकभ्राता स्वयं तु गत एव, मयि च इमं गुरुतरं भारं न्यक्षिपत् । न स्थातुं रोचते, नाऽपि परित्यक्तुम् ।

[ कपाटं खटखटायते ]

घूटरः को भवान् ? कोऽयम् ? वक्तुं न समर्थोऽसि किम् ? (भयेन विकृतस्वरः) प्रेतोऽयम् । हंहो तात ! प्रेतः । पुनः कपाटं खटखटायते । (क्षणं विरम्य) टुनटुनमा ! टुनटुनमाऽसि रे ! धावधावम् एहि, शीघ्रम् एहि ।

[ टु टुनो धावंधावम् एति ]

टनटुनः - किं भोः !

घूटरः - पश्य, प्रेतः कपाटं खटखटाकरोति । पूर्वं त्वं न विश्वासम् अकार्षीः । अधुना शृणु स्वकर्णाभ्याम् ।

टुनटुनः—सत्यं भो ! कपाटं मोचयित्वा पश्यतु । कोऽपि उपद्रावी दारको भवेत् ।

घूटरः—अरे तात ! भयं जायते ।

टुनटुनः - तर्हि तिष्ठ त्वम्, अहमेव पश्यामि । (पदद्वयं यावद् याति तावत् पुरो लोष्ठमेकं निपतति ।)

घूटरः - आरे रे तात ! पलायस्व, पलायस्व । लोष्ठक्षेपणं प्रारब्धम् । (पश्चाद् निवृत्य) दैवाद् मुक्तोऽस्मि, नो चेत् ललाटमेव विस्फुटितं स्यात् । अरे ! कथं न पलायसे, अतीव साहसिकोऽसि ।

टुनटुनः- पङ्गुक-पितृव्य ! अहं मन्ये, नाऽयं प्रेत । अयं कस्याऽपि दारकस्य उत्पातोऽस्ति । पश्यतु अहं कपाटम् उद्घाटयामि ।

[ कपाटम् उद्घाटयति ]

[ एको दारको धृतप्रेतरूपो दृश्यो भूत्वा अदृश्यो भवति । ]

घूटरः - प्रेतः, असौ प्रेतः !! प्रत्यक्षं पश्य। टुनटुनमा, अतःपरम् अहम् अस्मिन् गृहे कथमपि न स्थास्यामि। को नाम प्रेतगृहे प्राणान् समर्पयेत् ज्यौतिषिकभ्राता मृत, इदं च महद् गृहजालं मच्छिरसि प्रक्षिप्तवान्।

टुनटुनः - को भणति यद् मृत इति। मम स्वामी क्वापि तीर्थे भ्रमन् भविष्यति।

घूटरः - भ्राता अनूपः किं कथयति स्म इति जानासि?

टुनटुनः - किम्?

घूटरः - कथयति स्म यत् ज्यौतिषिकभ्राता एव प्रेतो भूत्वा स्वगृहदर्शनार्थम् आयाति।

टुनटुनः - मिथ्यैव लोकान् वञ्चयति स्म। नाऽसौ प्रेत आसीत्।

घूटरः - तत् किमासीत् रे!

टुनटुनः - सा पिशाची आसीत्, पिशाची। सा किमर्थम् आयाति इति जानाति भवान्?

घूटरः - न जाने।

टुनटुनः - यः अकृतविवाहो म्रियते, तत्प्रेतेन सह सा विवाहं करोति। अतः सा भवन्तं नेतुं वाञ्छति।

घूटरः - आ एवं किल तत्! हन्त भोः !! मां नेतुं वाञ्छति?

टुनटुनः - आम्। भवन्तं नेतु वाञ्छति सा।

घूटरः—यदि मे विवाहो भवति तर्हि सा मां त्यक्ष्यति?

टुनटुनः—अवश्यमेव त्यक्ष्यति।

घूटरः - टुनटुनमा, सहनुग्राहं प्रार्थये एकां यादृशीं तादृशीमपि कन्याम्.........

टुनटुनः - विवाहस्तु शुद्धे समये भविष्यति। तावत् प्रतीकाराय कञ्चन ओझावरम् उपगच्छतु भवान्। श्रूयते यद् एकः अतिविशिष्टो महात्मा समागतोऽस्ति बम्बाबा नाम।

घूटरः - बम्बाबा?

टुनटुनः - सत्य भोः! स प्रतिपदं 'बम्भोला दानी' इति पदं कीर्त्तयति। तस्मात् लोकैः स बम्बावेति कथ्यते। तदित आवां गच्छावः तस्यैवान्तिकम्।

घूटरः - तथाऽस्तु।

[ उभौ प्रस्थितौ ]

★ ★

## द्वितीयं दृश्यम्

[ वटवृक्षतले प्रज्वलितोऽग्निः। बम्बावा ध्यानमग्नः। फलाहारी आगच्छति, दूरादेव च दण्डवत् प्रणम्य एकस्मिन् भागे स्थितो भवति। ]

बम्बाबा - बम्भोला दानी, बम्भोला दानी। (चक्षुषी उन्मील्य फलाहारिणं विलोक्य, लौहदण्डम् उद्यम्य) पलायस्व, पलायस्व, पलायस्व.........

फलाहारी - (पृष्ठतोऽपसरन्) बावा! ताड़य वा मारय वा, नाहं प्रयास्यामि तव शरणात्।

बम्बाबा - बम्भोला दानी। ब्रूहि, किमर्थम् आगतोऽसि?

फलाहारी—बाबा! जिज्ञास्यं किञ्चिदस्ति।

बम० - प्रथमं समर्पय रूप्यकमेकम्। बम्भोला दानी। त्वरितम्।

फलाहारी - (रूप्यकमेकं समर्प्य) बावा, मम कन्या पुष्पा गृहात् फलायिता। न क्वापि उपलभ्यते। त्वमेव कथयितुं शक्नोषि—सा जीवति मृत्वा वा?

बम० - (क्षणं ध्यानमग्नः सन्) जीवति, जीवति सा।

फलाहारी - क्वाऽस्ति सा?

बम० – अत्युत्तमे स्थानेऽस्ति। तस्याः कामपि चिन्तां मा कुरु। 'बम्भोला दानी' स्वयमेव तस्या रक्षां करोति।

फलाहारी - कदा साक्षात्कारो भविष्यति?

बम० - तन्न कथयिष्यामि। गच्छ, पलायस्व, पलायस्व। (लौहदण्डम् उद्यच्छति।)

[ फलाहारी प्रणम्य प्रस्थितः ]

बम० - (पुनः अक्षिणी निमील्य) बम् भोलादानी। बम्भोला दानी।

[ ततः प्रविशति घूटरः ]

घूटरः - बम्भोला दानी। बम्भोला दानी।

बम० - (चक्षुषी उन्मील्य) बम्भोला दानी। (लौहदण्डम् उद्यम्य) पलायस्व, पलायस्व।

घूटरः - ( सवेगं पलायमानः खञ्जित्वा निपतन् ) हा हन्त भो ! एवंविधो महात्मा न क्वापि दृष्टः । त्वं तु लाटमेव भङ्क्तुं प्रवर्त्तसे ।

बम्० - बम्भोला दानी । आहतोऽसि किम् ? नाऽतःपरं ताडयिष्यामि । एहि ।

घूटरः - प्रथमं लौहदण्डम् अपाकुरु । ततोऽहं समीपमेष्यामि ।

बम्० - (लौहदण्डं दूरीकृत्य) ब्रूहि, किं कार्यमस्ति ?

घूटरः - आम्, बाबा ! एकम् अत्यावश्यकं कार्यमस्ति ।

बम्० - तर्हि समर्पय रूप्यकमेकम् । बम्भोला दानी । त्वरितम् ।

घूटरः - बाबा ! अहम् अतीव दरिद्रोऽस्मि । मदुपरि दया कार्या ।

बम्० - तर्हि तदर्धमेव देहि । बम्भोला दानी । त्वरितम् ।

घूटरः - (रूप्यकार्धं प्रदाय) बाबा, गृहाणेदम् । अहं यस्मिन् गृहे स्वपिमि, तत्र पिशाची आयाति ।

बम्० - पिशाची आयाति ? बम्भोला दानी । (क्षणं ध्यात्वा) अरे रे ! न खलु सा पिशाची ।

घूटरः - तत् किमस्ति तर्हि बाबा ?

बम्० - दारकाः प्रेतो भूत्वा भापयन्ते त्वाम् ।

घूटरः - दारकाः भापयन्ते ? सम्प्रति ज्ञातवृत्तोऽस्मि । यं श्यालं ग्रहीष्यामि तं तत्क्षणमेव षष्ठिकारात्रिदुग्ध वमयिष्यामि ।........बाबा ! (करबद्धः) एकाऽन्याऽपि जिज्ञासा ।

बम्० - ( हसन् ) बम्भोलादानी । विदितं तन्मया । यत् त्वं पिपृच्छिषसि । त्वं विवाहं कर्त्तुमिच्छसि ।

घूटरः - आम्, बाबा ! धन्योऽसि ! अनुक्तमपि जानासि । कथय मम विवाहः कदा भविष्यति ?

बम्० ( ध्यानमग्नः सन् ) बम्भोलादानी । तव विवाहः ? तव विवाहो भविष्यति चिरेण, सुचिरेण कालेन ।

घूटरः - कियद्दिनानन्तरम् ?

बम्० - अग्रिमे जन्मनि ?

घूटरः - अस्मिन् जन्मनि अहं कुमार एव मरिष्ये ? हा भगवन् ! (रोदिति ) ।

बम्० - ( लौहदण्डम् उद्यम्य ) पलायस्व, पलायस्व, पलायस्व ।

( घूटरः पलायते )

★ ★ ★

## तृतीय दृश्यम्

( लिलीदेव्या अध्ययनकक्षः । एकस्याम् आसन्द्यां कृष्णकान्तः चिन्तामग्न उपविष्टः । लिली देवी तस्य पृष्ठभागे स्थिता )

लिली- ( क्षणं प्रतीक्ष्य ) इतो न विलोकयसि किम् ?

कृष्ण० - विचकितः ) का, लिली देवी ?

लिली - अतःप्रभृति अमुकीदेवीति मा भण ।

कृष्ण० - तर्हि किं कथयानि, 'प्रियतमा' इति ?

लिली - न खलु तत् कथनीयम् ज्ञातव्यं हि तद् भवति ।

कृष्ण० - तर्हि त्वमेव भण यत् कथं सम्बोधयामि ।

लिली - केवलं 'लिली'ति भण ।

कृष्ण० - अस्तु । अहं 'लिली'ति कथयिष्यायि । त्वञ्च मां किं कथयिष्यसि ?

लिली - अहं कथयिष्यामि - 'माइ डियर' इति । ( हसति ) ।

कृष्ण०— अयं तु आङ्गल-व्यवहारोऽभूत् ।

लिली का तर्हि मिथिलायाः विशुद्धा परिपाटी ?

कृष्ण० — मिथिलायां प्रेम न मधुरैः शब्दैः, अपि तु आचरणेन प्रकटीक्रियते । अर्थाद् मिथिलायाः प्रेमलीला मूकाभिनयो भवति ।

लिली—ननु त्वं साम्प्रतं कीदृशं मूकाभिनयं कुर्वन्नासीः ? इदानीं कस्य चिन्तायां निमग्नोऽसि ?

कृष्ण०—लिलि ! चिन्तायाः विषयं मा स्मारय । अतःपरम् अहं कामये यत् तव अलकजाले निबद्धः सकलां चिन्तां विस्मरेयमिति ।

लिली - परन्तु आचरसि तद्विपरीतमेव । ज्ञायते यत् त्वं कस्मिन्नपि बन्धने फर्फरायमाण इव लक्ष्यसे ।

कृष्ण० - ( सक्रोधम् ) लिलि !

लिली - अपि अप्रियं ते ?

कृष्ण० - ननु जानासि यदहं कस्य जनस्य चिन्तायां निमग्नो वर्ते ?

लिली - यः प्रायः संसारेऽस्मिन् नास्ति ।

कृष्ण० - आम्, तत्परं तथैव ज्ञायते । नो चेद् मम विवाहस्य चर्चां श्रुत्वा दूरतरादपि अवश्यमेव समागच्छेत् । लिलि ! अहं सत्यं वदामि । त्वं कोपं मा कृथाः, अहं यया आशाया विवाहार्थम् उद्यतोऽभूवं सा निष्फलतां गता ।

लिली - भवान् व्यर्थमेव सन्तपति । इदानीमपि का बाधाऽस्ति ?

कृष्ण० - पश्चात्तापो न क्रियते । प्रसीदामि यत् तातः तस्य प्रेतात्मा वा मम त्वया सह विवाहं दृष्ट्वा सिद्धमनोरथः स्यात् ।

लिली - एकश्च प्रेतात्मा सन्तापमेष्यति ।

कृष्ण० - ( मनाक् क्रुद्ध इव ) लिलि ! न ते हृदये दया तस्यां निर्दोष-बालिकायाम् ? तव अप्रियं चेत् क्षम्यताम् ; तस्याः करुणस्मृतिः आजीवनं कण्टक इव ममान्तर्वेधनं करिष्यति । अद्य सा जीवन्ती चेत् ......

लिली - तदा किम् ? उच्यतामेव ।

कृष्ण० - त्यज्यताम् इयं निष्प्रयोजना वार्ता । एवंविधायाम् एव चिन्तायां मम जीवनं नष्टम् । एम० ए० परीक्षायां तृतीयश्रेणी लब्धा । आई० ए० एस० परीक्षायाम् अपि सकलः अवसरः परिच्युतः । जीवनस्य का योजना आसीत्, किं किं लक्ष्यम् आसीत्, कुत्र च समागत्य निपतितोऽस्मि ?

लिली - सर्वमेवैतद् ममैव कारणाद् इत्येव नु मन्यसे ? ( अञ्चलेन मुखं पिधाय रोदिति ) ।

कृष्ण० - स्कन्धं प्रगृह्य ) लिलि ! एतादृशीमपि दशाम् अवलोक्य मयि न करुणार्द्रा सदया भवसि ? मा मा रुदिहि एवम् । ( अश्रूणि तस्याः प्रमृज्य ) अस्यां दशायाम् एकाकिनी त्वमेव मम अवलम्बभूताऽसि । यदि त्वम् अमृतरसं नहि वर्षयेः, तर्हि मम हृदयं सन्तापेन दग्धं नूनं भस्मसाद् भविष्यति । लिलि ! एहि, समीपमेहि (बाहुं धृत्वा ) अश्रूणि मा मुञ्च । साम्प्रतं यत् किमपि मया उक्तं तत् सन्तप्तस्य हृदयस्य आवेग आसीत्, ज्वाला आसीत् ।

सकृत् सस्मिता भव। तेन च स्मितेन मम हृदयं शीतलं कुरु। सस्मितं, सस्मितवलोकय।

लिली - अहं तथा करोमि, यदि त्वमपि तथा करोषि।

कृष्ण० - आम्, आम्। अहमपि तथा करोमि। समम् एव द्वौ चन्द्रौ उदितौ स्याताम्। (लिलीं सस्मितां विलोक्य) नाऽभूत्, नाऽभूत्। मनाग् अपूर्णमिव दृश्यते। दाडिमस्य द्वात्रिंशदपि वीजानि प्रकटीभवन्तु। आम्, साम्प्रतं परिपूर्णमभूत्। अहा! मन्ये सिन्दूरीभूतस्य मेघस्य शय्यायां द्वितीयाचन्द्रः प्रसुप्तः।

लिली - उत कमलमध्ये हीरकहारो लम्बितोऽभूत्।

कृष्ण० - साधु, साधु। कियद् विलक्षणम् उत्तरम्! लिलि! चिरात् कालात् त्वं गीतं न अश्रावयः। अद्य एकम् एतादृश गीतं श्रावय, एतादृश गीतं श्रावय, यस्य मादकतायाम् अहं भूतस्य ज्वालां भविष्यस्य च चिन्तां सहैव विस्मरेयम्।

[लिली गीतं गायति]

न ज्वालय, न ज्वालय दीपं
सन्तमसे मां परित्यज ॥

मोह-मेघ-परिपूर्ण-निशायां
चित्ताऽतृप्तोद्दाम-तृषायां
सदादूरमिति मृगमरीचिकाम्
अमृत-तरङ्गं ननु कथय ॥ न ज्वा० ॥

असह्यं हि मम कुसुमं शयनं
म्लानं स्यान्मम कुसुमं शयनं
मधुरं मधु इव, मदिरां मर्वामिव
तिमिर-वेदनां ननु साहय ॥ न ज्वालय० ॥

हित्वा प्रतिपदमतीतच्छायां
त्यक्त्वाऽऽगन्त्रीं वञ्चक-मायां
जलाशय्यायां सुप्तपुष्पमिव
तिमिर-प्रवाहे मां वाहय ॥

न ज्वालय, न ज्यालय दीपं
सन्तमसे मां परित्यज ॥

★ ★

## चतुर्थं दृश्यम्

[ नगरस्य विस्तृता वाटिका। पुष्पा पुष्पवृक्षकुञ्जे प्रच्छन्ना। ]
बम्बाबा ताम् इतस्ततोऽन्विष्यन् ]

बम्बावा - वम्भोला दानी। अये ! न क्वाऽपि दृश्यते।
पुष्पा - ( कुञ्जादेव ) पू···३··· ···। अहं क्वाऽस्मि ?
बम्० —( क्रुद्धः सन् ) मम मस्तकेऽसि। क्वाऽन्यत्र स्याः ?
पुष्पा – ( समक्षमेत्य सक्रोधम् ) को भणति, को मां मस्तके धारयति ?
बम्० - वत्से ! बम्भोला दानी यावत् ते विवाहं न सम्पादयति तावत् त्वं मम शिरस्त्यक्त्वा क्व स्थास्यसि ?

पुष्पा - ननु त्वं विवाह-मिषेण मां स्वमस्तकाद् अवतार्य कस्यचन अन्यस्य मस्तके स्थापयितुं कामयसे ? नाऽहं कस्यापि मस्तके स्थातुम् इच्छामि।

बम्० - अलं कोपेन। कथमहं त्वां मस्तके स्थापयामि ? अहं तु स्वयमेव भिक्षुकोऽस्मि। तथापि त्वाम् अनाथां दृष्ट्वा बम्भोलादानी मयि ममत्वम् उत्पादितवान्।

पुष्पा - कः कथयति यद् अहम् अनाथा अस्मि ?
बम्० - अये, नाऽसि त्वमनाथा किम् ?
पुष्पा - नास्मि। नाऽहम् अनाथाऽस्मि। मम सर्वमस्ति।
बम्० - के के सन्ति ?

पुष्पा - आम्, सर्वमस्ति। पश्यतु - हस्तौ स्तः, पादौ स्तः, अक्षिणी स्तः, कर्णौ स्तः, सम्पूर्णे शरीरे च शक्तिः परिपूर्णाऽस्ति। त्वं मम बहुसाहाय्यं कृतवानसि। तवैव साहाय्येन अहं माध्यमिक-परीक्षोत्तीर्णाऽस्मि, अनाथालये च नानाविधानि कार्याणि शिक्षितवती। साम्प्रतं मे न कस्यापि साहाय्यस्य प्रयोजनम्।

वम्० - (ससाधुवादं पृष्ठं परमृशन्) साधु, पुत्रि! साधु! यस्याम् एतावद् आत्मबलम्, एतावत् साहसम्, एतावती च प्रौढता तिष्ठेत्, वस्तुतः ताम् अनाथां न कोऽपि वक्तुमर्हति। बम्भोलादानीकस्य कृपया तुभ्यम् एतादृशम् एव साहसिकम्, एतादृशम् एव प्रौढं वरम् अनेष्यामि।

पुष्पा – (विहस्य) त्वं वरम् आनेष्यसि? कुत आनेष्यसि?

बम् — 'सौराठ' सभातः क्रीत्वा आनेष्यामि बी० ए० समुत्तीर्णम्।

पुष्पा—(विहस्य) हें हें हें। अयमेव बी० ए० समुत्तीर्णं वरम् आनेष्यति! पोट्टलिकायां रूप्यकं स्याद अर्धरूप्यकं वा इत्यत्राऽपि सन्देह एव ............। (बम्बाबाकस्य कुक्षिसंस्थितां पोट्टलिकां हठाद् आदाय भूमौ विकिरति। प्रभूततराणि दशरूप्यकमुद्रापत्राणि फरफरायन्ते)। अरे रे तात!! एतावन्ति?

बम्० – (सकलानि चिन्वन्) हां हां हां! किमिदं कृतम्?

पुष्पा – बाबा! एतावद्भी रूप्यकैः किं करिष्यसि?

बम्० अये! तवैव विवाहं कारयिष्यामि।

पुष्पा—बाबा! अहं चरणौ ते गृह्णामि। रूप्यकाण्येतानि मह्यं देहि।

बम्० - बम्भोलादानी। एतानि रूप्यकाणि गृहीत्वा त्वं किं करिष्यसि?

पुष्पा - बाबा! अहम् एकां प्रतिज्ञां कृतवती।

बम्० - कां प्रतिज्ञां कृतवती असि?

पुष्पा - त्वया श्रुतं भवेद् यत् कस्यचन फलाहारीतिनाम्नो ब्राह्मणस्य पुत्री ..

वम्० - आम्। श्रुतवानस्मि गृहं परित्यज्य पलायिता।

पुष्पा - अपि जानासि, कथं पलायिता? पण्डितम्मन्यः कोऽपि युवा तस्य अपमानम् अकार्षीत्। न तस्या एव, प्रत्युत मिथिलायाः कन्यामात्रस्य अपमानं कृतवान्। मिथिलायाः महिलां च गोमय-पिण्डम् अकथयत्, गलगण्डम् अकथयत्। सा वराकी अपमानं सोढुमसमर्था, मन्ये आत्मघातं कृतवती। बाबा! तस्याः करुणां घटनामिमां श्रुत्वा मे चित्तं ज्वलितमिव सञ्जातम्। तदैवाऽहं प्रत्य-

जानम्-स्वप्राणस्य एकैकं श्वासं, स्वरक्तस्य एकैकं कणम् अह मैथिल-महिला-समजस्य उद्धारे उत्स्रक्ष्यामि। यावच्च 'लखिमा'याः भगिन्यः भारतस्य आदर्श-ललनाः न भवेयु तावत्पर्यन्तं शान्ति न लप्स्ये। बाबा! तव बम्भोलादानी एतानि रूप्यकाणि तव हस्तेन मदर्थमेव प्रेषितवान् अस्ति। रूप्यकाणि मह्यं देहि। अह एतैः रूप्यकैः महिला सेवाश्रम स्थापयिष्यामि।

बम्० - साधु, पुत्रि! एतादृशीम् एव पुत्रीं कामयमान आसम्। बम्भोलादानी तवैतां प्रतिज्ञाम् अवश्यमेव पूरयिष्यति इदानीं ते स्पष्टः परिचयो जातः। त्वयि मम पूर्णो विश्वासोऽभवत्। त्वत्तश्च पूर्ण-साफल्यस्य आशां करोमि। गृहाण एतानि रूप्यकाणि यावदहं जीवामि तावदस्मिन् सत्कार्ये तव साहाय्यं विधास्यामि।

[ पुष्पा रूप्यकाणि आददाति ]

—:०:—

## पञ्चमं दृश्यम्

[ आधुनिकरीत्या सज्जितं प्रकोष्ठम् । दिगम्बर चौधरीः एकस्यां शयनासन्दिकायां न्यस्तशरीरः आकाशवाणीं शृण्वन् विराजते । जगदीशः त्वरमाण आगच्छति ] ।

जगदीशः - धन्योऽसि भोः !

दिगम्बरः - कथं, कथम् ?

जगदीशः - तत्र सर्वस्वान्तो भवति, अत्र च त्वम् आकाशवाण्यां निमग्नोऽसि !

दिगम्बरः - सर्वस्वान्तो भवति ?

जगदीशः - आम् , सकला सम्पत्तिः विनष्टा भवति ।

दिगम्बरः - कथं, कथम् ?

जगदीशः - अधिवक्तृमहोदयेन कृष्णकान्तो वलाद् 'वसी'पत्रं लेखापयति ।

दिगम्बरः - ( उत्तिष्ठन् ) तत् त्वया कथं ज्ञातम् ?

जगदीश;- अहं तु पूर्वत एव त्वां सावधानीकुर्वन्नस्मि !

दिगम्बरः - गतं त्यज । वद, अतः परम् एतस्य क उपायः सम्भाव्यते ?

जगदीशः - समुद्यतो भवसि चेद् वहव उपाया सन्ति ।

दिगम्बरः - आम् , अहं समुद्यतोऽस्मि ।

जगदीशः - समुद्यतोऽसि ? तर्हि गृहाण भुशुण्डीम् । गच्छ मया सह ।

दिगम्बरः - अये ! भुशु ...... ण्डी ...... ?

जगदीशः - आम् , भुशुण्डी । त्वं विभेषि कथम् ? तस्य प्रयोगो नाऽपेक्ष्येत ।

दिगम्बरः - गच्छ त्वम् अग्रे अग्रे ।

जगदीशः - गच्छ ।

[उभावपि तीव्रगत्या प्रस्थितौ]

★ ★

## षष्ठं दृश्यम्

[अधिवक्तृमहोदयः पर्यङ्के निषण्णो रुग्णः। पुरत एकस्याम् आसन्द्यां लिली अपरस्यां च कृष्णकान्तः ]।

अधि० - कृष्णकान्तबाबू

कृष्ण० - श्रीमन् !

अधि० - अलं भवतः स्वभविष्यचिन्तया। पश्यति भवान् इमां विशालां सम्पत्तिम् ? इयं भावादृशस्यैव कस्यचन उपयुक्तस्य पुरुषस्य वर्त्म अन्वेषयति। अहं तु साम्प्रतं पक्वम् आम्रम् इव सञ्जातः। अद्य लुप्ये श्वो वा।

कृष्ण० - न खलु, न खलु एवं वाच्यम्।

अधि० - ( उपबर्हतलाद् एकं कर्गतम् आदाय लिलीं समर्पयन् ) लिली ! गृहाण इदम्। अद्यप्रभृति त्वमेव मम सम्पत्तेः उत्तराधिकारिणी सञ्जाता।

लिली - तात ! किमिदं कृतम् ? भ्रातुः का गतिः स्यात् ?

अधि० - आह ! तस्य दुश्चरितस्य नामाऽपि न ग्राह्यम्। मां मृत्युशय्यां गतमपि द्रष्टुं न आगतः। पुत्रस्य मनोरथं मे त्वमेव अपूरयः। वस्तुतो न त्वं मम पुत्री; ननु पुत्रोऽसि मे त्वम् ......। तस्मै कियतीमपि सम्पत्तिं दास्यामि चेत् स स्वमूर्खत्वेन तस्याः रक्षां कथं कर्त्तुं पारयेत् ?

[ अकस्माद् दिगम्बरो जगदीशश्च आयातः ]

दिगम्बरः - एवं कर्त्तुं पारयेत्। (लिलीदेव्या हस्तात् कर्गतं हठाद् आदाय छित्वा च प्रक्षिपन्) किं तात ! भवान् अधिवक्ता भूत्वाऽपि एवमेव न्यायं करोति ? किं नाऽहं भवत उत्तराधिकारी ? नाऽहं भवतः पुत्रः ?

( लिली कृष्णकान्तश्च सभयम् उत्तिष्ठतः )

अधि० - ( उपविश्य ) ब्रूहि, को नाम पुत्रः, यो म्रियमाणं पितर कदापि न पश्यति, केवलं पितुः श्रमार्जितेन धनेन विलसति, स एव ?

दिगम्वरः—ननु अहमपि पृच्छामि, को नाम पिता ? यः पुत्रम् उत्तराधिकाराद् वञ्चितं करोति, स एव ?

कृष्ण०—( दिगम्बरं प्रति ) भवता शान्तेन भाव्यम्। पितुः रक्तचाप उग्रो भवेत्।

दिगम्वरः—भवान एव अशान्ति रचयति, भवानेव च उपदेश करोति यत् शान्तेन भाव्यम् इति। भवान् तातेन वलाद् ऋक्थ-पत्रं लेखापयितुं वाञ्छति। तद् मम जीवनपर्यन्तं न शक्यते कर्तुम।

अधि०—ननु अह स्वेच्छाया लिखतवान् अस्मि। पत्रस्य नाशनेन किं स्यात्। अहं पुनरपि लेखितुं शक्नोमि।

दिगम्वरः—मया तस्यापि उपायो विचारितः। जगदीश ! किं विलोकयसि ? निगृहाण एनं, प्रेषय च पुलिसालयम्। ( कृष्णकान्तं निगृहीतुम् अग्रेसरति )।

अधि०—(उत्थाय रोद्धुं चेष्टमानः) मैवं, मैवम्। किमिदं क्रियते ? बुधना असि रे ! एहि, शीघ्रमेहि।

दिगम्बरः - ( विकृतं हास्यं कृत्वा ) हाः हाः !! चीत्कारेण न किमपि फलं स्यात। परितः कपाटमवरुद्धम् अस्ति।

अधि०—मन्ये, भवान् स्वोत्तराधिकार-संरक्षणार्थं प्रचुरं षड्यन्त्रं कृतवान् अस्ति। यदि तदेव कर्त्तव्यम् अस्ति तर्हि जीवत एव मे गलं छिनत्तु। भवतः सकलो मार्गः निरापदो भविष्यति। (कम्पते)।

लिली - (दिगम्बरस्य हस्तं गृह्णन्ती) भ्रातृवर ! भ्रातृवर । किमिदं क्रियते ?

दिगम्बरः - त्वं किमर्थं रोदधुं समायाता ? तवैव दुराचारात् कुकाण्डानि इमानि जातानि ।

अधि० - पूर्वं छिन्धि मे गलम् । ततो गृहाण मे सर्वस्वम् । (कम्पमानो निपतति ।)

लिली - (बाहुभ्यां प्रगृह्य) तात ! तात ! किम् अभूद् भवतः ? भ्रातृवर ! भिषग्वरम् आकारयतु ।

दिगम्बरः - अलं भिषग्वरेण । तादृशं विषं त्वया अस्य कर्णे निक्षिप्तं यद् अधुना वैद्यस्य पिताऽपि रक्षितुं न पारयेत् । लिली ! धनस्य लोभेन त्वम् एतादृशी अधःपतिता भवेः इति नासीद् मे विश्वासः ।

जगदीशः - लिलीदेव्यै खलु व्यर्थमेव दोषं ददासि । अस्याः शिरसि हि अन्यस्य मन्त्रो नृत्यति ।

लिली - (रुदती) तात ! तात !! ... ...

दिगम्बरः - रोदिषि कुतः ! प्रथमं तातस्य घातकम् अपसारय, ततो रोदिष्यसि । कृष्णकान्त ! भवान् भद्रमिच्छति चेद् इतः तत्क्षणं पलायताम् । पुनश्च कदापि स्वकृष्णं मुखं लिलीदेवीं मा दर्शयतु ।

कृष्ण० - मां भवान् घातकं मन्यते ? पितृवधो भवता कृतः, दोषी चाऽहम् ?

दिगम्बरः - अवहितो भव ! त्वरितं मत्पुरतो दूरीभव ! नो चेत् पश्य इमां भुशुण्डीम् ।

कृष्ण० - स्वयम् अहं गच्छामि । अनुव्रज मां लिलि !

लिली - (भीता सती) भ्रातृवर ! कथम् एवं करोषि ? तव सम्पत्तौ लोभो मे मनागपि नास्ति । परन्तु अहं क्व यानि ?

दिगम्बरः - तूष्णीं भव ! को भणति त्वं याहीति ।

कृष्ण० - लिलि ! अनुव्रज । प्रतिष्ठस्व ।

लिली - (दिगम्बरं प्रति) अये, नाऽहं तमनुगच्छेयम् ? (अग्रेसरन्ती इतस्ततः करोति ) ।

दिगम्बरः - (लिलीं निषेधन्) तिष्ठ। यदि अनेन सह एकमपि पदम् अग्रेसरसि तर्हि पश्य इमां भुशुण्डीम् !

कृष्ण० - लिलि ! यदि मयि ते वास्तविकं प्रेम तर्हि अनुगच्छ माम्। कुरु माहसम। एहि, अग्रे सर, अग्रे सर।......... न खलु प्रस्थिता त्वम्। अस्तु, तिष्ठ। ज्ञातं, मया ज्ञातम। अह मयायाम् आसम्। अहं मृगतृष्णायाम् आसम् !! (प्रतिष्ठते।)

लिली - (रुदती) तात ! भ्रातः ! शिक्षकवर ! शिक्षकवर ! (मूर्च्छिता निपतति।)

[ मुखपटः पतति ]

● ●

## तृतीयोऽङ्कः

### तत्र प्रथमं दृश्यम्

[लम्बाकारं भवनम् । सम्मुखे चत्वारि कपाटानि । प्रतिकपाटम् एकैकं नामपट्टं क्रमशः 'कृषिः', 'शिक्षा', 'उद्योगः', 'चिकित्सा' चेति । सर्वोपरि बृहद् नामपट्टम्—'महिला-सेवाश्रमः' । प्रघाणे एकः पत्रमञ्चः, त्रिचतस्र आसन्द्यः, एकस्यां पुष्पा समुपविष्टा, समक्षम् अपरस्याम् आसन्द्यां फलाहारी । ]

फलाहारी - दिने इयं लीला जाता । तद्रात्रौ च मे कन्या गृहं त्यक्त्वा पलायिता ।

पुष्पा - अहं जाने भवतः कन्यायाः समाचारम् ।

फलाहारी - (प्रसन्नो भूत्वा) किम्, भवती जानाति ? सा क्वाऽस्ति ?

पुष्पा - क्वाऽस्तीति तु न जाने । समाचारपत्रे एतावत् तु पठितं यत् सा विवाहसमये अपमानिता सती गृहात् पलायिता ।

फलाहारी - ततःप्रभृति न क्वाऽपि तस्याः सूचना उपलभ्यते । श्रुतं मया यद् भवती स्त्रीसमाजस्य उद्धारार्थं व्रतं गृहीतवती । भवती अस्माकं कृते देवी भूत्वा समागता । (करबद्धः) बद्धाञ्जलिः अहं प्रार्थये-- भवती मम कन्यायाः उदन्तम् उपलभताम् इति ।

पुष्पा - अलम् अधैर्येण । न सा दुरवस्थां गन्तुमर्हति ।

फलाहारी - तद् भवत्या कथं ज्ञायते ?

पुष्पा - यस्या हृदये स्वाभिमानं जागर्ति, आत्मरक्षायाः प्रौढ़ता तिष्ठति, तां को नाम अपकुर्यात् ? भवता धीरता अवलम्बनीया । अहं तस्या उदन्तम् अवश्यमेव अन्विष्य सूचयिष्यामि ।

फलाहारी - भगवान् भवत्याः कल्याणं करोतु ।

[फलाहारी गच्छति । ततः सुगिया दूराद् एव क्रन्दनं कुर्वन्ती समागच्छति ।]

सुगिया - मातर् मातः ! अत्याहितम् अत्याहितम् !! सर्वेषां रक्षां भवती करोति, मामपि रक्षतु, रक्षतु मामपि भोः !

पुष्पा - किम् अत्याहृतं ते ?

सुगिया - अयि मातः, अयि मातः ! भर्त्रा निर्दयं ताड़िताऽस्मि भोः !

पुष्पा - अहा ! तथा ताड़िताऽसि, यथा गीतं गायं-गायं रोदिषि । इदानीं शान्ता भव । कथय, कुतः ताड़िताऽसि ?

सुगिया - कोद्रवं भर्जयन्ती आसम् । आगतमात्र एव स सघर्षम् अयाचत--. जलपानं देहि, जलपानं देहि, जलपानं देहि इति । मया उक्तम्-- अपि किमपि महत् कार्यं कृत्वा समागतोऽसि येन त्वरितं जलपानं दद्याम् इति । एतावद् एव उक्तवत्यां मयि स तत्रैव इन्धनदण्डम् उत्थाप्य मां भृशं ताड़ितवान् । ( बाहुम् अनावृत्य दर्शयन्ती ) पश्यतु नाम स्फुटितानि मे अङ्गानि !

पुष्पा - अतीव कठोरहृदयोऽस्ति ते भर्ता । सम्पूर्णमपि दिवसं निरर्थकम् उपविश्य यापयति । तवैव उपर्जितेन उदरम् अपि पूरयति, तालरस-मपि पिबति, त्वामेव च निष्ठुरं ताड़यति !...... ...त्वञ्च सर्वं सहसि ! अस्त्येवम् ?

सुगिया - किं करवाणि देवि ! भगवता नारी कृताऽस्मि । अतः ताड़नं गालिं च सर्वं सोढ़व्यम् एव ।

पुष्पा - नहि सर्वाभिः नारीभिः ईदृशी दुर्दशा भुज्यते । पश्यसि रूपिणी-देवीम् । साम्प्रतं सा बहु मन्यते भर्त्रा ।

सुगिया तादृशं दिनं मम कदा भवेत् !

पुष्पा - मम वचनं करिष्यसि चेत् तवापि दिनं तथैव भविष्यति ।

सुगिया –यद्-यद् भवती कथयिष्यति, तत्-तत् कर्त्तुम् अहं समुद्यता अस्मि । इतोऽधिकां गाल्यादि-दुर्दशां सोढुं न समर्थाऽस्मि ।

पुष्पा - यावत्पर्यन्तं स्वामी क्षमायाचनां न करोति तावत्पर्यन्तं स्वप्राङ्गणे चरणौ मा निधेहि । अस्मिन् एव सेवाश्रमे कार्यं कुरु, अत्रैव च तिष्ठ । यदैव च द्वित्रान् दिवसान् रिक्तोदरः स्थास्यति तदैव स्वतः तव चरणयोः निपतिष्यति ।

सुगिया – (प्रौढतया) किं भविष्यति चरणनिपातेन ? लक्षवारमपि चरणयोः निपतिष्यति, लक्षवारमपि अनुनयं विधास्यति, तथापि अहं न तम् उपगमिष्यामि। का मे चिन्ता ? यावद्दिनं यत्रैव परिश्रमं करिष्यामि तत्रैव ग्रासमात्रम् अन्नं लप्स्य एव।

पुष्पा - अस्तु, प्रथमं किं करणीयमिति जानासि ? लेखनं पठनं च अभ्यसनीय स्यात्।

सुगिया - हंहो मातः! भवती तु विचित्रं प्रलपति। मादृशा जना लिखित्वा पठित्वा वा किं कुर्युः ?

पुष्पा - (सस्मितम्) किञ्चिदपि लेखनं पठनं च अज्ञास्यः चेद् एवं गञ्जनं न सोढव्यम् अभविष्यत्। शिक्षा लब्धा चेत् स्वामी रात्रिन्दिवं चरणतल-सेवां करिष्यति। गच्छ, मन्ये शिक्षिका आगता।

सुगिया - यथाऽऽज्ञापयति देवी। परन्तु, मम हास्यम् आयाति।

[ सुगिया गच्छति। अथ बाम्बाबा आयाति ]

पुष्पा - ( दूरादेव आयान्तं विलोक्य उत्थाय अग्रे गत्वा ) अयि ! बाम्बाबा ? ( समीपम् एत्य प्रणमन्ती ) बम्भोलादानी।

बम्बाबा - बम् भोलादानी। चिरं जीव।

पुष्पा - एहि, एहि। उपविश। त्वम् अत्र कथं समायातः!

बम्० - तवैव मायया आकृष्ट इह आगतः। पुत्रि! अभिलाषा जाता यत् पश्यामि त्वया किं किं कृतम् इति। पर्यटन् इह सम्प्राप्तोऽस्मि अतीव प्रशंसा श्रुता तत्र। क्षणं मामपि तु दर्शय किं किं कृतवती असि इति।

पुष्पा - अहं किं करिष्यामि बाबा! सर्वम् एतत् तवैव आशीर्वादस्य, तवैव परिश्रमार्जित-रूप्यकाणां फलमस्ति। एहि, प्रथमम् एनम् आश्रमम् अवलोकय।

[ उभौ गच्छतः ]

## द्वितीयं दृश्यम्

[ नृत्यमञ्चः । नेपथ्य-गानं भवति । ]

सखि हे ! जागृहि जागृहि, पश्य प्रातः ॥

प्रसृताः प्राच्यां सिन्दूर-किरणाः,
मन्दस्मितो मधु-वातः ।

सखि हे ! जागृहि जागृहि, पश्य प्रातः ॥

[ गानं प्रवर्त्तते । कृषक - महिलाया एकः संघः स्कन्धे कुद्दालमादाय गायन् नृत्यन् च समागच्छति ] ।

आयाहि आयाहि चल,
क्षुरप्र-कुद्दालं धर,
आकारयति माता धरिणी ।
डाल्यां ताम्बूल-फुल्लं दत्त्वा
अञ्चले दूर्वा-धान्यं दत्त्वा
नित्यशः सौभाग्यं तव भरिणी ॥

बुभुक्षितः सन् सुप्तः पतिस्ते,
परिवेषस्व दाली-भक्तम् ॥

सखि हे ! जागृहि जागृहि, पश्य प्रातः ॥

[ प्रथमः संघः गच्छति । अपरश्च हस्ते कार्पासमादाय गायन् नृत्यन् च समागच्छति ] ।

आयाहि आयाहि चल,
अञ्चले कर्पासं धर,
'घों घों' चालय तर्कुचक्रम् ।
कृष्णचन्द्रवीर इव,
द्रौपद्याश्चीरम् इव,
वर्षय त्वं भूरि वस्त्रम् ॥

शीतेन विकलस् तेऽद्याऽपि भर्ता,
पिधेहि पिधेहि तस्य गात्रम् ॥
सखि हे ! जागृहि जागृहि, पश्य प्रातः ॥

[ द्वितीयो गणो गच्छति । तृतीयो गणो हस्ते कृष्णपट्टम् आदाय नृत्यन् गायन् आगच्छति ] ।

आयाहि आयाहि चल,
पाटीं स्लेट च धर,
आकारयति 'भारती' त्वाम् ।
तव तु 'मण्डनो' भ्राता,
प्रच्छन्नरूपे त्राता,
'शङ्करात्' परास्त एति लज्जाम् ॥
अङ्गुष्ठ-चिह्नं दत्ते पतिस् ते,
क्रियतां खटिका-हस्तः ॥
सखि हे! जागृहि, जागृहि, पश्य प्रातः ॥

[ तृतीयो गणो याति । चतुर्थो गणः सैनिकवेषे नृत्यन् गायन् आयाति । ]

आयाहि आयाहि चल,
हृदि नव-शक्तिं धर,
'लखिमायाः' शृणु आह्वानम् ।
जातेस् तथा देशस्य,
भाषायाश्च वेशस्य,
रक्षायाम् अर्पय प्राणान् ॥
भयात् प्रच्छन्नस तेऽद्याऽपि भर्ता,
कुरु कुरु तद्भयम् अपास्तम् ॥
सखि हे ! जागृहि, जागृहि, पश्य प्रातः ॥

[ चतुर्थो गणो याति । बम्बाबा पुष्पा च आगच्छतः । ]

बम्बाबा—साधु, साधु ! ... ... ... पुत्रि, तव कर्मसाफल्यम् अवलोक्य अद्य

अहम् अतीव प्रसन्नोऽस्मि। मम भिक्षायाः एकैकः पणः अद्य त्वत्प्रसादाद् अनेकान् अनाथान् सनाथयति, असंख्यान् अशरणान् शरणयति, बह्वीः अबलाश्च सबलाः करोति ! इदानीम् अहम् आश्वस्तोऽस्मि, अद्य श्वो वा त्वत्प्रतिज्ञा अवश्यमेव पूर्णा भविष्यति। एकदा पुनर् मिथिलाया महिला भारतस्य आदर्श-भूतासु महिलासु ख्याता भविष्यति !

पुष्पा—बाबा, क्षुत्पिपासितो भवेः। एहि, किमपि फलमूलादिकं प्रसादं गृहाण।

[ उभावपि गच्छतः ]

## तृतीयं दृश्यम्

[ गाढ़ सायंकाल: । आम्र-वाटिका । रेलमार्ग: । गहनान्धकारे कृष्णकान्तः स्थितः, छाया इव क्रमशो दृश्यताम् एति । जलपात्रहस्तो घूटर आयाति, कृष्णकान्तं दूरादेव विलोक्य सहसा विरमति । ]

घूटरः - टुनटुनमा, टुनटुनमा..........! प्रथमं धावंधावम् एहि ।

[ टुनटुन आगच्छति ]

टुनटुनः - किं भोः !

घूटरः - (आङ्गुल्या निर्दिशन्) पश्य रेलमार्गे प्रेतः ।

टुनटुनः - धिग् भोः ! भवता तु सर्वत्र प्रेत एव अवलोक्यते । आयातु, समीपम् एत्य पश्यावः ।

घूटरः - त्वमेव गच्छ । मम तु भयेन दीर्घशङ्काऽपि लुप्ता !

टुनटुनः - धिग् भोः ! ननु पुरुषोऽसि, भयं कस्य ? आगच्छ । (करं धृत्वा वलाद् अग्रे सरति ।)

[ क्रमशः प्रकाशः स्पष्टतरो भवति । घूटरः टुनटुनश्च एकभागे तिष्ठतः । कृष्णकान्तः स्पष्टं दृश्यताम् एति ।]

कृष्ण० - (घटीं विलोक्य) समयस्तु सम्प्राप्तः । अद्य रेलयानं विलम्बितम् अस्ति किम् ? अहो, भाग्यहीनः खलु अहम् । मरणेऽपि नैकशो विघ्नानि भवन्ति । वरं मुजफ्फरपुर एव जीवन-लीला समाप्येत । अलं जन्मभूमि-दर्शन-लालसया । जन्मभूमे, जन्मभूमे ! मातृभूमे ! शान्ति देहि । अस्माद् जीवनाद् मुक्त्वा शान्ति प्रदेहि । नाऽहं किमपि अन्यत् कामये । पुत्रवत्सल पितः ! अज्ञातनाम्नि वालिके ! विफलस्नेहे लिलि ! सर्वेभ्यः अहम् अन्तिमां भिक्षां याचे–मम सकलोऽपराधः क्षन्तव्य इति । हे ईश्वर ! यदि त्वं सत्योऽसि, मह्यं मुक्ति देहि, अस्माद् विफलात् जीवनाद् मुक्ति देहि । आगता रेलशकटी !! (यानमार्गे कूर्दति) । अये, अहं जीवित एवाऽस्मि किम् ? शकटी

नायाता ? विभ्रान्तिरियम्, विभ्रान्तिः। चित्तं कुण्ठितमिव, मूढ़-मिव जातम्। अधुना रेलशकटस्य समय एव नास्ति। (घटीं विलोकयति।)

टुन० - भोः! अयं चौर इव प्रतिभाति। तिष्ठतु भवान्, अहं गृह्णामि एनम्। (सहसा गत्वा पृष्ठतो गृह्णाति।) कोऽसि रे, त्वं कोऽसि ?

कृष्ण० - (विचकितः) अएँ, अहम् ?............अहम्.........अहमस्मि।

टुन० - अहम कः ? वद !

कृष्ण० - तद् ज्ञात्वा त्वं किं करिष्यसि ? मां कथं धृतवान् असि ? मुञ्च माम्।

टुन० - अत्र किं कुर्वाण आसीः ?

कृष्ण० - रेलशकटस्य प्रतीक्षायाम् आसम्। आयातः, आयातो धूमशकटः। मां मुञ्च, मुञ्च माम्।

टुन० - त्वं धूमशकटे आत्मघातं कर्त्तुम् इच्छसि ? अरे, उन्मत्त इव लक्ष्यसे त्वम्। (घूटरं प्रति) किं पश्यति भवान्। गृह्णातु एनम्। गृहीत्वा नयतु 'मइजी' देव्याः समीपम्।

कृष्ण० - (अङ्गानि विधूनयन्) मुञ्च माम्। नाऽहं मत्तोऽस्मि, नाऽहं विक्षिप्तोऽस्मि। मुञ्च, आयातः, आयातो धूमशकटः। मुञ्च।

घूटरः - (अङ्गानि विधुन्वानं विलोक्य) नाऽहं ग्रहीष्यामि रे! यदि कदाचित् निपातयेत् तर्हि अपरोऽपि चरणः समाप्तः स्यात्।

टुन० - धिग् भोः। गृहाण इमं बाहुम्। शक्तिहीनोऽयम्। नाऽयं स्वबाहुं मोचयितुं समर्थः।

कृष्ण० - मुञ्च। अहं प्रार्थये मुञ्च।

टुनटुनः - अहमपि किं त्वादृश एव उन्मत्तोऽस्मि यद् मोक्ष्यामि धूमशकटे मरणार्थम्।

[ उभौ बलात् प्रगृह्य निर्गच्छतः ]

## चतुर्थं दृश्यम्

[ सेवाश्रम कार्यालयः । पुष्पा आसन्द्यां समुपविष्टा, हस्ते समाचारपत्रम् । पार्श्वे सुगिया स्थिता । ]

पुष्पा - क्व गताऽऽसीः ?

सुगिया - (सस्मितम्) भवती न कुप्येत् चेद् वदामि ।

पुष्पा - कथमहं कुप्यामि । परन्तु ज्ञातवृत्ताऽस्मि । त्वया तद्दिनस्य सकलान्यपि गाली-गञ्जन-ताड़नानि विस्मृतानि ?

सुगिया - देवि ! ताड़नादि सहनम् अस्मादृशानां जातिधर्म एव ।

पुष्पा - धन्यो जातिधर्मः ! अपि ताड़नं ते रोचते ?

सुगिया - देवि ! इदानीं तु नितान्तम् अप्रियं प्रतिभाति । परन्तु कदाचिद् एतादृशोऽपि समय आसीद् यदा ताड़यति भर्तरि सर्वाङ्गं रोमाञ्चितं भवति स्म ।

पुष्पा - मया तु लक्ष्यते यत् साम्प्रतमपि तत् त्वां रोमाञ्चयति । किं नैवम् ?

सुगिया - देवि ! भवती किं ज्ञास्यति यत् कथं भवति रोमाञ्चः । परिणीता चेद् भवती तदा ज्ञातं भवेद् यत् कस्यापि हस्तस्य ताड़नेऽपि सितोपलं मिश्रितं भवति ।...... देवि ! किञ्चित् प्रष्टुम् इच्छामि ।

पुष्पा - पृच्छ ।

सुगिया - भवती कथं न विवाहं करोति ?

पुष्पा - नाऽहं कस्याऽपि गलगण्डं भवितुम् इच्छामि । तदेव कारणम् ।

सुगिया - तदेव ? समाजे कोऽयं वातः प्रचलितः ! आर्यज्यौतिषिकस्य यः पुत्रोऽस्ति, सोऽपि विवाहं नैव वाञ्छति । कथयति यद् अहम् आजीवनं कुमार एव वत्स्यें । बलाद् विवाहं कारयितुं प्रवृत्ते पितरि सः......

[ नेपथ्ये कृष्णकान्तः - अहो ! बलाद् मा कर्षय । मुञ्च ! मां मुञ्च । ]

[ कृष्णकान्तं गृह्णन्तौ बूटर - टुनटुनौ आगच्छतः ]

कृष्ण० - (मोचयितुं चेष्टमानः) त्यज माम् । मां त्यज । नाऽहं पलायिष्ये ।

पुष्पा - आर्ये ! किमिदम् ?

कृष्ण०—एतौ निष्कारणं मां गृहीतवन्तौ । कृपया भवती मोचयतु माम् आभ्याम् ।

टुनटुनः—देवि ! अयं रेलशकटे आत्मघातं कर्त्तुम् उद्यत आसीत् ।
पुष्पा—अये ! रेलशकटे आत्मघाताय उद्यतः ? कथम् ?
टुन०—तत् पृच्छतु एनम् ।
पुष्पा—अपि भवान् आत्मघाताय उद्यत आसीत् ?
कृष्ण०—प्रथमं माम् एताभ्यां नरराक्षसाभ्यां मोचयतु । प्रार्थये अहम् ।
पुष्पा—(टुनटुनं प्रति) भवन्तः अतः परं मुञ्चन्तु एनम् ।
टुन०—देवि ! मोक्ष्यामि चेत् पुनरपि अयं पलायिष्यते रेलशकटे आत्मघाताय ।

कृष्ण०—विश्वसितु भवती, नाऽहं पलायिष्ये ।
पुष्पा—( उत्थाय स्वहस्तेनैव मोचयित्वा सदय करं गृहीत्वा आसन्द्याम् उपवेशयन्ती ) एतु, उपविशतु अत्र ।

कृष्ण०—( उपविश्य उच्छ्वसन् ) जलं, ... जलं लप्स्यते किम् ?
पुष्पा—आम् । त्वरितमेव आनयामि । ( सुगियां प्रति ) गच्छ, पूर्णं जलपात्रमानय । ( अञ्चलेन व्यजन्ती ) अहो ! भवान् प्रभूतेन प्रस्वेदेन स्नात इव सञ्जातः ।

[ सुगिया गत्वा जलम् आदाय पुनरागच्छति ]

कृष्ण०-(पूर्णं जलपात्रम् एकेनैव श्वासेन पीत्वा ) हुऽऽ ... ... ।
पुष्पा—भूरि इष्यते ?
कृष्ण—नहि, अतःपरं नेष्यते ।
पुष्पा—सुगिये ! व्यजनम् आनय ।

[ सुगिया गच्छति ]

घूटरः- टुनटुनमा ! पश्य, साम्प्रतं कीदृशः शान्तो भूत्वा उपविष्टोऽस्ति ।
टुन०—तदेव पश्यतु ।

कृष्ण० - एते पुनरपि मां ग्रहीतुं कामयन्ते ।

पुष्पा - नहि, नहि । नाऽतःपरं कोऽपि भवन्तं गृह्येत । भवान् निश्चिन्तं तिष्ठतु ।

[ सुगिया व्यजनम् आदाय आगच्छति । पुष्पा तेन व्यजति । ]

कृष्ण० - ( पुष्पायाः हस्ताद् व्यजनम् आदातुं चेष्टमानः ) देहि व्यजनम् । न त्वया कष्टं विधेयम् । अहं स्वयमेव व्यजामि ।

पुष्पा - भवतो देहः साम्प्रतमपि कम्पते । व्यजनं हस्तात् निपतिष्यति ।

कृष्ण० - साम्प्रतं भवती प्रष्टुं शक्नोति । यत् कथम् आत्मघातं कर्त्तुं प्रवृत्तोऽस्मीति ।

पुष्पा - नाऽहम् इदानीं प्रक्ष्यामि । प्रथमं स्नानभोजनादि कृत्वा पूर्णः प्रकृतिस्थो भवतु । ततः सकला वार्ता विधेया । ( घूटरं टुनटुनं प्रति च ) भवन्तौ अस्य प्राणरक्षां कृतवन्तौ तदर्थं धन्यवादार्हौ । अधुना अयं सुरक्षितं स्थानं प्राप्तोऽस्ति : भवन्तौ गन्तुं शक्नुतः ।

*

## पंञ्चमं दृश्यम

[ ग्रामाद् बहिः आम्रोपवनम् । मध्ये एकं जीर्णं शिवमन्दिरम् । तदग्रे बम्बाबा डमरुं नादयन् नृत्यति । ]

बम्बाबा - डिम् डिम् डिम् डिम्
डिम् डिम् डिम् डिम्
डमरुः पश्य रटति हे ।
बम्भोला दानी ।
बम्भोला दानी ।।

डमरोस्ताले
भुवनत्रयमपि
सततं चारु नटति हे ।
बम् भोला दानी ।
बम् भोला दानी ।।
डिम् डिम् डिम् डिम्
डिम् डिम् डिम् डिम्
डमरुः पश्य रटति हे ।
बम् भोला दानी ।
बम् भोला दानी ।।

[ गीतं समाप्तं भवति । फलाहारी आगच्छति । ]

फलाहारी - बम्भोला दानी ।
बम्० - बम् भोला दानी ।
फला० - बाबा ! पूर्वं त्वया कथितं यत् पुष्पा प्रत्यावृत्ता भविष्यति इति ।
बम्० - नाऽद्यपर्यन्तं सा प्रत्यावृत्ता ?
फला० - वर्षत्रयं व्यतीतम् । न क्वापि तस्या उदन्तो लक्ष्यते ।
बम्० - मद्वचने विश्वासो नाऽभूत् किम् ?
फला० - तव वचने कथं न विश्वासो भवेत्, परन्तु तथापि शान्ति न लभे ।

वम्० - ( विहस्य ) शान्तिः ? यदा मयापि शान्तिः न लभ्यते तदा त्वया कथं सा लभ्येत ?

फला० - त्वयाऽपि न लभ्यते शान्तिः ? त्वं कस्य मायायाम् असि ?

बम्० - यस्यैव मायायां त्वम् असि।

फला० - अएँ ! किमुच्यते ?

वम्० - एवमेतत्। सर्वे एकस्यैव वम्भोलादानीकस्य मायायां नृत्यन्ति। त्वं नृत्यसि वानर इव। अहं नृत्यामि प्रवृद्धकूर्चको भल्लूक इव। अयं संसारो नृत्यति लघुविल्वनिर्मिता घूर्णिनीव। ( पुरो विलोक्य) अयञ्च क एति ढेकुल्यां नृत्यन् इव ?

( घूटर आगच्छति )

घूटरः - वम् भोला दानी।

बम्० - वम् भोला दानी।

घूटरः - वावा ! एका वार्ता श्रुता किम् ?

वम् - का ?

घूटरः - ह्यः सन्ध्यायां कश्चित् कोट-पैण्टधारी ज्यौतिषिकभ्रातुर्गृहान्तिकं समागतः, गृहं च शिरो नामं नामं प्रणमति स्म ......।

वम्० - हुम् ?

घूटरः - अथ स ततो रेलमार्गसमीपं गत्वा रेलशकटे आत्मघाताय उद्यतोऽभूत् !

बम्० - अये ! अपि स जीवति ?

घूटरः - शृणु प्रथमं, कथयामि। अहं टुनटुनम्। च तं गृहीत्वा 'माइजी' देव्याः समीपं प्रेषितवन्तौ।

वम्० - साधु, साधु कृतम्। बम् भोला दानी। ( सत्वरं प्रतिष्ठते )।

घूटरः - बाबा, क्व प्रस्थितोऽसि ?

फलाहारी - बाबा !

घूटरः - नाऽयं श्रोष्यति अयमपि विक्षिप्तप्राय एव।

[ बम्बावा गच्छति ]

फला० - क आसीत् सः ?

घूटरः - यो वा को वा भवेत्। निरर्थकमेव सा वार्ता अस्मै कथिता। यत् प्रष्टव्यम् आसीत् तत् तु दूरे स्थितं, मध्य एवाऽयं पलायितः।

फला० - क उपायः ? गच्छाम इदानीम्।

[ उभावपि गच्छतः ]

×

## षष्ठं दृश्यम्

[ सेवाश्रमस्य कार्यालयः। एकस्याम् आसन्द्यां पुष्पा अपरस्यां च कृष्णकान्तः। मध्ये पत्रमञ्चोपरि कतिचित् पुस्तकाः समाचारपत्राणि च। ]

पुष्पा—इदं तावत् कथ्यताम्। यां बालिकां जुगुप्सया भवान् त्यक्तवान् सा क्व गता, कां गतिं प्राप्ता - इति भवता ज्ञायते ?

कृष्ण०—आः ! सा बालिका ? अलं तस्याः स्मरणेन। तस्याः प्रेतात्मा मदीयां मूर्खतां साटोपम् उपहसति।

पुष्पा—(स्मित्वा) प्रेतात्मा उत जीवात्मा ?

कृष्ण०—जीवात्मा ? सा जीवति इति भवत्या कथं ज्ञायते ?

पुष्पा—यथा भवता ज्ञायते यत् सा मृता इति।

कृष्ण०—मम अन्तरात्मा भणति यत् सा बालिका मम कुकृत्यवशात् प्राणान् अमुचत्, पिताऽपि मे तत एव स्वदेहम् अत्यजत्। अतःपरम् अनुमन्यतां, अहमपि तत्कुकृत्यफलभोगाय प्राणान् उत्स्रक्ष्यामि। अलं निरोधेन।

पुष्पा—ननु तावद् एवं विचारणीयम्। यदि अत्र भवान् प्राणपातं कुर्यात्, तत्र च भवतः पिता जीवितः तिष्ठेत् तर्हि, पश्चात् तस्य का दशा भविष्यति ?

कृष्ण०—हन्त ! भवती मोहयतीव मे चित्तम्। कर्त्तव्यविमूढः कृतः, विचित्रे विभ्रमे च निक्षिप्तोऽहम्। (शिरसि हस्तं कृत्वा क्षणं विचार्य सहसा उत्थाय च) अस्तु, नाऽहम् आत्मघातं करिष्ये। अनुजानातु; गच्छाम्यहम्।

पुष्पा—(उत्थाय) क्व ?

कृष्ण०—तातस्य अन्वेषणाय। (प्रतिष्ठते।)

पुष्पा—(रोधयन्ती) मा मैवम्। रभसात् मा प्रतिष्ठताम्।

कृष्ण०—ओः ! उक्तं मया, मा मां निवारयतु। कोऽधिकारो भवत्या मे निवारणे ?

पुष्पा - (करं गृहीत्वा) क्षणं श्रूयतां नाम ।

कृष्ण०—अतःपरं नाऽहं किमपि श्रोष्यामि । यतो वा ततो वा तातम् अन्विष्य आनेष्यामि । तात ! तात !!.......... ...क्वाऽसि ? तात..........!

[ बम्बाबा आगच्छति ]

बम्० - बम्भोला दानी ।

पुष्पा - बम्भोला दानी । स्वागतं ते । ननु अवसरे सम्प्राप्तोऽसि । पश्य, अयम् आत्मघातं कर्त्तुम् उद्यतोऽस्ति ! निवारय एनं, रक्ष अस्य प्राणान् ।

बम्० - (दृढ़तया बाहुयुगलं प्रगृह्य) क्व गन्तुम् उपक्रमसे ?

कृष्ण० - (साऽऽक्षेपम्) मुञ्च, मुञ्च माम् । नाऽहम् आत्मघातं कर्त्तुं गच्छामि । अहं पितरम् अन्वेष्टुं यामि । तात ! तात........ !

बम्० - भवतः तातः प्राप्तः ।

कृष्ण०– (बम्बाबाकस्य मुखं विलोकयन्) क्वाऽस्ति, क्वाऽस्ति मे तातः ? त्वरितं ब्रूहि । कथय, क्वाऽसौ । कथं न वदसि (परिचित्य बाहुग्राहं गृहीत्वा च ) अये ! भवानेव मम तातः ? तात........!

बम्० - आम्, अहमेव मन्दभाग्योऽस्मि । वत्स ! तव इयं दशा ?

कृष्ण० - तात ! क्षमस्व । (चरणौ गृहीत्वा) क्षमस्व । मम कुकृत्येन भवान् घोरतरं कष्टं सम्प्राप्तः । स्वकुकृत्येऽहं स्वयमेव पश्चात्तापं करोमि । पश्चात्तापस्य समिद्धायां ज्वालायां दह्यते मे चेतः । ममापराधं क्षमस्व ।

बम्० - ( उत्थापयन् ) वत्स ! उत्तिष्ठ । नाऽयं ते दोषः, समाजस्य दोष एषः, यो विवाहम् अधुनाऽपि पुत्तलिका-क्रीड़ाम् अवगच्छति । त्वया न मयि कोऽपि अपराधः कृतः । अपराधश्चेद् यस्यां कृतः, तस्याः क्षमा-याचनां कुरु ।

कृष्ण० - यस्याम् अहम् अपराधी, अपि सा जीवति ?

बम्० – अवश्यं जीवति । न सा त्वादृग् दुर्बलहृदया, येन रेलशकटे आत्मघाताय प्रयतेत । त्वया न सा वस्तुतो ज्ञाता । ननु त्वया हीरकं काच

इति मत्वा निक्षिप्तम्। जीवनरक्षिका च जीवनकण्टकम् अवधार्य तिरस्कृता। न सा मानवी; साक्षाद् देवी खलु सा।

कृष्ण०—अपि भवती एव सा देवी ? देवि ! क्षमस्व। क्षमस्व मेऽपराधम्। अहं चरणौ ते गृह्णामि। (तथा कर्त्तुं चेष्टते।)

पुष्पा - (निवार्य उत्थाप्य) उत्तिष्ठतु। भवता न कश्चिदप्यपराधः कृतः। ननु तदा सत्यमेव उक्तं भवता यद् मैथिलमहिला गलगण्डस्वरूपेति। धन्यो भवान् यद् मे नेत्रम् उन्मीलितम्। सत्यं, मे गुरु र्भवान्। मार्ग-दर्शको भवान् !!

कृष्ण० - तात ! भवान् एनां कथं पर्यचिनोत् ?

बम्० - अस्या एव कृते अहं वेषमिमं धृतवान्।

पुष्पा - मदर्थं भवान् अतीव कष्टम् असहत। अजानन्त्या मया अनेकः अप-राधः कृतः। स सर्वोऽपि क्षम्यताम्। (चरणौ स्पृष्ट्वा प्रणमति।) अतःपरं भवता तां भूमिकां विहाय स्वेन रूपेण दर्शनं देयम्। भवतः अस्याः भूमिकायाः अभीष्टम् अद्य मन्ये, पूर्णतां गतम्।

बम्० - एकम् अभीष्टम्; केवलम् एकम् अभीष्टम् अद्यापि अवशिष्यते। तद् यावत् न पूर्णतां याति तावत् पर्यन्तं बम्बाबा बम्बाबा एव स्था-स्यति।

पुष्पा - नूनं तत् पूर्णतां गमिष्यति। भवत आज्ञामात्रं प्रतीक्षते तत्।

कृष्ण० - तात ! कथय, किमतःपरं ते प्रियं करोमि ? अहं सर्वमेव अनुष्ठातुं समुद्यतोऽस्मि।

बम्० - वत्स ! किं पुनरुक्तेन। मया तत् कियन्ति वर्षाणि पूर्वमेव निवेदितं तुभ्यम्।

[कृष्णकान्त पुष्पाया मुखं प्रेक्षते। पुष्पा सलज्जं सस्मितं च अधोमुखी भवति]

★ ★ ★

## सप्तमं दृश्यम्

[ ज्यौतिषिकस्य बहिर्गृहम् । चतुष्पादिकायां ज्यौतिषिकः समुपविष्टः ]

ज्यौतिषिकः - टुनटुनमा ! टुनटुनमाऽसि रे ! .................................
न क्वाऽपि अवलोक्यते वराकः ।

( घूटर आयाति )

घूटरः - ज्यौतिषिकभ्रातः ! पश्यति भवान्, टुनटुनमा यत् शठत्वं करोति ?

( टुनटुन आगच्छति

ज्यौ० - किं रे ?

टुन० - आर्य, न किमपि । मनाक् पृष्टो यत् कति खार्यः तण्डुलानि कुट्टितानीति ।

ज्यौ० - अरे मूर्ख, अलम् एवंविधेन चापलेन । उत्पातं करिष्यसि चेत् कर्णौ मर्दयिष्यामि । गच्छ, नापितम् आह्वय । मार्गे 'फूल'पितृव्यमपि निवेदयिष्यसि यत् स शीघ्रम् आगच्छेदिति ।

( टुनटुनमा प्रतिष्ठते )

ज्यौ० - क्षणं तावत् शृणु । मौदकिकम् आदिश यत् स त्वरितं प्रस्थदशकं लड्डुकम् आनयेदिति । न वनस्पति-पक्वम्, शुद्धं घृतपक्वम् ।

टुन० - यथाज्ञापयति आर्यः । ( पुनः प्रतिष्ठते । )

ज्यौ० - अरे रे मन्थर, कथमेवं चलसि । ननु त्वरया गच्छ, त्वरया ।

( टुनटुनो गच्छति )

घूटरः - अद्य किमिदं भवति ?

ज्यौ० - अहो, हन्त ! त्वया इदानीम् अपि न अवगतम् ।

घूटरः— नहि ।

ज्यौ० — अद्य मम वत्सस्य विवाहः ।

घूटरः— कृष्णस्य विवाहो भविष्यति ? क्व ?

ज्यौ०— यत्र वा तत्र वा भवेदेव। शीघ्रं प्रस्थानाय सज्जो भव। त्वमपि वरयात्रायां यास्यसि।

घूटरः— यथाज्ञापयति भवान्। त्वरितमेव सज्जो भूत्वा आगच्छामि। चपकन - चोलकं स्वकीयमेव अस्ति। पागं नाम उष्णीषं कुतश्चिद् याच्यम्। भवान् न दास्यति किम् ?

ज्यौ०— धिङ् मूर्ख ! तुभ्यमेव दास्यामि तर्हि स्वयं सम्बन्धी भूत्वा रिक्तमूर्द्ध एव गमिष्यामि किम् ?

घूटरः— एकस्तु उष्णीष आसीत् क्वाऽपि। पटले सलग्नः कृतः आसीत्। (पटले अन्वेषणस्य अभिनयं कृत्वा एकं जीर्णं पागं च अवतार्य) इदम् अत्रैव तु प्राप्तम्। (परिधाय ज्यौतिषिकं प्रति) अशोभनं तु न ?

ज्यौ०— पागादिकं पश्चाद् ग्रहीष्यसि। गच्छ प्रथमं, पण्डितं कथय यत् पौरोहित्यं कारयेदिति। अन्यत्र तु अहं स्वयमेव कारयामि। परन्तु स्वकार्ये अन्यस्यैव प्रयोजनम्। स्वयं वरपिता भूत्वा पद्धतिं कथं ग्रहीष्यामि। गच्छ शीघ्रम्।

घूटरः— यथाज्ञापयति भवान्।

(घूटरो गच्छति)

ज्यौ०— टुनटुनमा, टुनटुनमाऽसि रे ! ....................................................
यदैव अन्वेषयामि, तदैव लुप्तः। ............... ..................आम्
.............................. ..................टुनटनं तु स्वयमेव प्रेषितवान् अस्मि नापितगृहम्। अश्वयानम् आनेतुं को गच्छेद् इदानीम् ? काले कोऽपि न दृश्यते। क उपायः, स्वयम एव गच्छामि। (उपरि भित्तौ लम्बितं भगवत्याश्चित्रं प्रणमितुम् उत्तिष्ठति, तत्रैव लम्बिते पत्न्याः चित्रे दृष्टिं निपतति) प्रिये, त्वं परलोकं गता। अद्य जीविता चेत् कियान् उत्साहः स्यात्, कियान आनन्दः स्यात् ! घूर्णिनी इव समस्ते प्राङ्गणे नृत्यन्ती स्याः घूर्णिनीव !! (अक्षि अश्रुयुक्तं भवति, तत्प्रमृज्य भगवतीं प्रणमति) जय मातः कालिके !

(गच्छति)

★ ★

## अष्टमं दृश्यम्

( पटले आधुनिकी श्रृङ्गारसामग्री प्रसृता। पुरतो दीर्घो दर्पणः स्थापितः। पुष्पा आसन्द्याम् उपविष्टा दर्पणे मुखं दर्शं दर्शम् आत्मनः श्रृङ्गारं विदधती स्वसौन्दर्ये स्वयमेव मुग्धा मन्दं मन्दं गायति। )

पुष्पा— निजमाननं दर्पणे प्रेक्ष्य,
चन्द्रमुखी वेपत उत्प्रेक्ष्य ॥
(स्मित्वा) को वदेत्, को वदेद् यद् अद्याह कीदृशीति।

( सुगिया आयाति )

सुगिया - अतीव सुन्दरी प्रतिभाति अद्य भवती !

पुष्पा - (स्मित्वा) यथार्थमेव ?

सुगिया - वस्तुत इन्द्रस्य अप्सरा इव प्रतीयते भवती।

पुष्पा - गे, त्वम् अलकतिलकं कर्त्तुं जानासि ?

सुगिया - कीदृशं तिलकम् ?

पुष्पा - यादृशं विवाहे क्रियते।

सुगिया - अपि भवती विवाहं करिष्यति ? पूर्वं कथयति स्म यद् विवाहं नैव करिष्यामीति।

पुष्पा - विवाहं न करोमि, पुरुषे विजयं करिष्यामि, पुरुषे विजयम्। सुगिये ! अद्य अतीव मे आनन्दः। पुरुषे विजयः, महिलाया जीवने अतोऽधिकः क आनन्दः स्यात् ?

सुगिया - अयि हे ! विजयं करिष्यति भवती ?

पुष्पा - आम्, विजयं करिष्यामि, विजयम्। त्वं न ज्ञास्यसि।

सुगिया - अयि ! तत् कथम् ? किम् अहं नारी नाऽस्मि ?

पुष्पा - तर्हि श्रृणु, कथयामि। एकदा अहम् एकस्य पुरुषस्य हस्तं ग्रहीतुं समुद्यता।

सुगिया - हस्तं ग्रहीतुं समुद्यता ?

पुष्पा - आम्, हस्तं ग्रहीतुं समुद्यता। परन्तु, हन्त ! स पुरुषः साऽधिक्षेपं

हस्तम् अपसार्य पलायितः। अहं तु लज्जया मृता इव। ...............
अद्य स एव पुरुषः मम पादचुम्बनार्थम् आयाति! स एष कथं नाम
विजयो नोच्येत ?

सुगियाः कोऽसौ एवंभूतः पुरुषः ?

पुष्पा - तम् अचिरेणैव द्रक्ष्यसि। साम्प्रत स्वर्णकारगृहं याहि। आभूषणानि
एतानि निर्मलीकृत्य आनय। (आभूषणानि अर्पयति) गच्छ, शीघ्रम्
आगन्तव्यम्।

[सुगिया गच्छति]

पुष्पा - (गायन्ती नृत्यन्ती च)

अधिगताऽद्य विजयं रे।
जय जय जय जय जय रे॥

तनुश्चञ्चला मनश्च-चलं,
स्फुरितं हृदयं स्फुरत्यञ्चलम्।
त्रपा कस्य सङ्कोचः कस्य,
अधुना कस्य भयं रे।
जय जय जय जय जय रे॥

प्रकम्पितं प्रकरोति पदं रे,
वर्धमानमिव मदवेगं रे।
शान्तं कथमपि नाऽद्य भवेदिति,
मत्तं मे हृदयं रे।
जय जय जय जय जय रे॥

[लिली उच्छ्वसिता धावन्ती आयाति]

लिली - सावधानं भव, सावधानम्। समापय विजयगानम्। इदानीं युद्धं
न समाप्तिं गतम्।

पुष्पा - (विस्मिता सती) अये, का भवती ?

लिली - अहं साऽस्मि यस्याः चिताभूमौ त्वं विजयस्तम्भं स्थापयितुम् इच्छसि।

पुष्पा—हन्त भोः ! कथम् एवम् उच्यते भवत्या ?

लिली—भवत्या क्रियते, अतो मया उच्यते। मम सौभाग्यम् अपहृत्य त्वं सौभाग्यवती भवितुम् इच्छसि ।

पुष्पा—तत्कथम् ?

लिली—अपि त्वं जानासि यद् यस्योपरि त्वं विजयं कर्त्तुं वाञ्छसि तदुपरि काऽपि पूर्वमेव विजयं कृतवती ।

पुष्पा—( मर्माहता सती ) किम्, किम् उक्तवती भवती ? भवती पूर्वमेव विजयं कृतवती ? ( साञ्जलिः ) क्षमस्व माम्। नाऽहम् इमां कथां पूर्वम् अजानम् !

लिली—न जानासि ? मिथ्या ! पूर्णतो मिथ्या !! स वञ्चकः, स धूर्त्तः त्वां न किमपि निवेदितवान् ? क्व गतोऽस्ति सः ? प्रकटय तम्, आनय तं मत्पुरतः। अहं तस्यैव मुखात् श्रावयामि। यदि स अपलपेत्, तर्हि पश्य इदम् ( विषपुटकं दर्शयन्ती )। अनेन एकेनैव पुटकेन भवत्याः विजयमार्गः निष्कण्टको भविष्यति !

पुष्पा—भगिनि ! विश्वसितु मयि भवती। नाऽहम् अन्यायं कर्त्तुं शक्नोमि।

लिली—अन्यायं न कर्त्तुं शक्नोषि। तर्हि एहि मया सह तस्य वञ्चकस्याऽन्तिकम्। ( पुष्पायाः बाहुं गृहीत्वा बलात् ताम् अग्रे सारयन्ती प्रतिष्ठते )।

पुष्पा - मुञ्चतु बाहुम्। अहं स्वयमेव गच्छामि ।

[उभे अपि गच्छतः]

★ ★

# नाटककारः

विद्वन्मूर्द्धन्यस्तत्रभवान् पण्डित श्री गोविन्दझा साहित्यकारो भाषाशास्त्री मधुवनीमण्डलान्तर्गतेसहपुरग्रामाभिजनो माण्डर-सिहौलमूलको मैथिलश्रोत्रियो, महावैयाकरण-दीनबन्धुझाशर्मणः पुत्रो, १९२३ ई० वर्षे लब्धजन्मा, विविध-भाषावेत्ता, संस्कृत-मैथिली-हिन्द्याङ्ग्लभाषासु ग्रन्थकर्त्ता, बिहारसर्वकारीय-सचिवालये राजभाषाविभागे लब्धोपनिदेशकपदः, सम्प्रति पटनास्थित-मैथिली - अकादमीति - सर्वकारीय - संस्थाया निदेशको वर्तते। मैथिल्यामेतत्प्रणीता ग्रन्थाः (१) बसातनाटक, (२) राजाशिव-सिंहनाटक, (३) अन्तिमप्रणामनाटकेति रूपकत्रयम्। (४) लघुविद्योतन व्याकरण (५) उच्चतर मैथिलीव्याकरण (६) मैथिलीक उद्गम ओ विकासेति व्याकरण-भाषाविज्ञानग्रन्थत्रयम्। (७) संक्षिप्त मैथिलीक छन्दःशास्त्र (८) कविता संग्रह (९) एकाङ्की-संग्रह (१०) कथासंग्रहेत्यादयः सन्ति। एतस्यानूदित-ग्रन्थाः संस्कृतान्मैथिल्यां, बंगभाषातो मैथिल्याम्, आङ्ग्लभाषातो हिन्द्यां, मैथिलीतो हिन्द्यामनेके प्रकाशिता दृश्यन्ते।

# अनुवादकः

वातावरणनाटकस्यानुवादकः पं० श्री शशिनाथ झा व्याकरण-साहित्याचार्यः, एम० ए० ( संस्कृत ) समुत्तीर्णः, विद्यावारिधिः विद्यावाचस्पतिः, बुधवाल - डुमरा-वंशावतंस -सच्छ्रोत्रिय पं० श्री गङ्गानाथझाशर्मणः पुत्रोः, मधुवनीमण्डलान्तःपातिदीपग्रामवास्तव्यो, महावैयाकरण-दीनबन्धुझाशर्मणो दौहित्रः, १९५१ ई० वर्षे लब्ध-जन्मा, का०सि०दरभङ्गासंस्कृत-विश्वविद्यालयीय - स्नातकोत्तर-व्याकरण-भाषाविज्ञान-विभागीयप्राध्यापको वर्तते । नानाप्राचीन-पाण्डुलिपीनां सम्पादकस्यास्य संस्कृते पञ्जीप्रबन्धनाटकम्, मैथिल्यां मदालसानाटकं, हरिश्चन्द्रचम्पूः, ईशावास्य-स्फुटकाव्यम् इत्यादि-रचना विद्यन्ते ।

संस्कृत-दिवस-समारोहावसरे २३।८।१९८३ दिनाङ्के विश्व-विद्यालयीय-स्नातकोत्तरच्छात्रैरभिनीतस्य वातावरणनाटकस्य प्रथमाभिनये

## अभिनेतारः

[ संस्कृत-नाट्य-परिषदः सदस्याः ]

| पात्राणि -- | छात्रनाम -- | विभागः -- | पुरस्कारः |
|---|---|---|---|
| १. कृष्णकान्तः | श्री विद्यानाथ झा | साहित्यम् | तृतीयः |
| २. जगदीशः | श्री आमोद कुमार मिश्रः | धर्मशास्त्रम् | |
| ३. ज्यौतिषिकः | श्री राधाकान्त ठाकुरः | ज्यौतिषम् | द्वितीयः |
| ४. अधिवक्ता | श्री वङ्केश्वर झा | साहित्यम् | |
| ५. फलाहारी | श्री अरुणेवर झा | ज्योतिषम् | |
| ६. ठेङा | श्री सुधीर कुमार झा | व्याकरणम् | |
| ७. घूटरः | श्री हलधर झा | ज्योतिषम् | प्रथमः |
| ८. टुनटुनः | श्री अमरनाथ झा | साहित्यम् | |
| ९. वम्बाबा | श्री शम्भुनाथ चौधरी | व्याकरणम् | |
| १०. बटुः | श्री अर्जुन रायः | साहित्यम् | |
| ११. दिगम्बरः | श्री सर्वनारायण झा | ज्योतिषम् | |
| १२. पुरोहितः | श्री सुधीर कुमार झा | व्याकरणम् | |
| १३. लिली | श्री विजय कुमार झा | साहित्यम् | पञ्चमः |
| १४. पुष्पा | श्री दयानाथ झा | व्याकरणम् | चतुर्थः |
| १५. खञ्जनिका | श्री गणेश झा | ,, | |
| १६. सुगिया | श्री विजय कुमार झा | ,, | |

★ ★

# कामेश्वरसिंह-दरभंगा-संस्कृत-विश्वविद्यालय
## कामेश्वरनगर, दरभंगा

### विक्रेतव्य पुस्तकें

| क्र. सं. | पुस्तक नाम | लेखक एवं सम्पादक | मूल्य |
|---|---|---|---|
| १ | विद्यापति-संस्कृत-ग्रन्थावली-- | | |
| (१) | प्रथमभाग (हिन्दीअनुवादसहित) (विभागसार एवं शैवसर्वस्वसार) | स० (१) डॉ० जयमन्त मिश्र (२) डॉ० इन्द्रकान्त झा | ७५।- |
| (२) | द्वितीय भाग (हि. अ. स. शैवसर्वस्वसार-प्रमाणभूत-पुराणसंग्रह एवं दानवाक्यावली) | स० (१) डॉ जयमन्त मिश्र (२) प श्री आनन्द झा | ७५।- |
| २ | म० म० गोकुलनाथ-ग्रन्थावली-- | | |
| (१) | रसमहार्णव | स० (१) प० श्रीधर्मनाथ झा (२) प० श्री कुमुदनाथ मिश्र | ६।- |
| (२) | आलोक मंगलविचार | स० (१) ,, ,, | २०।- |
| (३) | मासमीमांसा | (१) प० धर्मनाथ झा | ६।- |
| ( ) | अनुमितिदीधिति विद्योत | स० (१) प० श्रीधर्मनाथ झा (२) प० श्री रामसेवक झा | ७।- |
| (५) | गोकुलनाथग्रन्थगुच्छ (दिक्कालनिरूपणम् रूढिव्याख्यारहस्यम् मिथ्यात्वनिरूपणञ्च) | स० ,, ,, ,, | ७।= |
| (६) | कुण्डकादम्बरी | स० (१) प० श्री धर्मनाथ झा (२) प० श्री कुमुदनाथ मिश्र संशोधक विद्यावारिधि प० श्रीरामचन्द्र झा | २०।- |
| (७) | तत्त्वचिन्तामणौ उपमान-रश्मिचक्रम् (म० म० गोकुलनाथ) | स० (१) प० श्री रामसेवक झा प० श्री रामचन्द्र झा | २०।- |

## ३ म० म० वाचस्पतिग्रन्थावली--

| | | |
|---|---|---|
| (१) कृत्यप्रदीप; | स० (१) डॉ जयमन्त मिश्र<br>(२) प० धर्मनाथ झा<br>संशोधक प० श्री कृष्णानन्द झा | २४।= |
| (२) श्राद्धचिन्तामणि— | स० (१) डॉ० जयमन्त मिश्र<br>(२) प० श्री धर्मनाथ झा<br>संशोधक प० श्री रामचन्द्र झा | ३०।- |
| (३) आचारचिन्तामणि-- | व० (१) डॉ जयमन्त मिश्र<br>(२) प० श्री धर्मनाथ झा<br>(३) प० श्री कृष्णानन्द झा<br>(४) प० श्री शशिनाथ झा | ३५।- |

## ४ सुलभग्रन्थमाला--

| | | |
|---|---|---|
| (१) मेघदूत (गुटकामूल) | प० श्री रामचन्द्र मिश्र | ०।५० |
| (२) रघुवंश (मूलमात्र सम्पूर्ण) | " " " | ४।- |
| (३) समासशक्तिदीपिका – | ले० महावैयाकरण दीनबन्धु झा | ५।- |
| (४) उपसृष्टधात्वर्थसंग्रह | ले० " " "<br>सं० डॉ० शशिनाथ झा | ६।- |
| (५) मेघदूत (जगद्धरीयरसदीपिनी-व्याख्योपेत) | सं० श्री हृषीकेश झा | १२।- |
| (६) कुमारभार्गवीयम् | सं० प० श्री रामचन्द्र मिश्र | २०।- |
| (७) ध्वनिकल्लोलिनी-- (हिन्दी अनुवादसहित) | ले० अनु० प० श्री आनन्द झा | २५।- |
| (८) विज्ञानं समाजश्च | ले० डॉ सरयू प्रसाद गुप्त<br>सं० वि० वा० रामचन्द्र मिश्र | २५।- |
| (९) सुभाषितावली (हिन्दी अनुवादसहित) | ले० विद्यावाचस्पति प० श्री उपेन्द्र झा | २०।- |
| (१०) मिथिलामाहात्म्य – | सं० प० श्री धर्मनाथ झा | ५।- |
| (११) अभिनन्दनमाला— | सं० प० श्री रामचन्द्र मिश्र | ६।- |
| (१२) छोन्दोगानां विवाहपद्धतिः – | सं० पा० श्री तेजनाथ झा | ५।- |

(१३) मिथिला का इतिहास — ले० डॉ० रामप्रकाश शर्मा — ७५।-

(१४) स्मृति साहस्री — ले० रमाकर — १५।-

१५ लौकिक न्यायरत्नाकर — सं० प० श्री रामचन्द्र मिश्र — ४५।-

१६ तिथिनिर्णय — ले० म० म० राजनाथ मिश्र २५।-सजिल्द
(सपरिशिष्टः) — सं० वि० वा० रामचन्द्र झा २०।-अजिल्द

१७ ग्रहणमाला — ले० म० म० हेमाङ्गद ठाकुर — २०।-
सं० प० श्री व्रजकिशोर झा

१८ नियमावली एवं पाठ्यग्रन्थावली (१९८३ से प्रवृत्त) — प्रकाशकः सं० वि० वि० (दरभंगा) ८।-

## ५ महाराजाधिराज कामेश्वरसिंह-ग्रन्थमाला--

(१) परमलघुमञ्जूषा
म० म० शशिनाथ झा कृत
सरलाख्य व्याख्योपेत — सं० (१) विद्यावारिधि रामचन्द्र मिश्र (२) डॉ शशिनाथ झा — १५।-

(२) भारतीय सर्वस्वम् (हिन्दी व्याख्योपेत) — ले० प० श्री भोलानाथ मिश्र — ४५।-

(३) प्रयोगपल्लवः (भवनाथकृत) — डॉ० शशिनाथ झा — ३७।-

(४) तर्क संग्रह (न्यायबोधिनी सीतापद्मा व्याख्यासहित) — पं० श्री आनन्द झा — ४५।-

(५) शकुन्तला विवृति — ले० प० आँखी झा — १५।-
सं० कृपाकान्त ठाकुर

### यन्त्रस्थ

(१) न्यायवैशेषिक वार्त्तिक — सं० प० श्री अनन्तलाल ठाकुर

(२) उणादिरत्न कौमुदी — प० श्री अर्जुन झा

(३) प्रायश्चित्तव्यवस्थासार — प० श्री० रामचन्द्र मिश्र

(४) न्यायमञ्जरी (हिन्दी टीकोपेत) — प० श्री आनन्द झा

(५) लघुशब्देन्दु शेखर (हिन्दी टीकासहित) — प० श्री ताराकान्त झा

६ उपवन विनोद — श्री कृष्णानन्द झा

विशेष:---प्रकाशन की कीमत कुलसचिव कामेश्वरसिंह दरभंगा संस्कृत विश्वविद्यालय, कामेश्वरनगर, दरभंगा के पदनाम से (K.S D S, शाखा दरभंगा) बैंक ड्राफ्ट द्वारा पहले ही प्रेषणीय है। आदेश के उपरान्त प्रोफोरमा देयक भेजा जायगा।

अथवा

प्रकाशन मूल्य की राशि अग्रिम भेज कर किसी निकटस्थ बैंक के माध्यम से भी मंगवाया जा सकता है।

विशेष:—त्रैमासिक शोध पत्रिका "विश्वमनीषा" १५। वार्षिक (विगत ७ वर्षों से संचालित) मूल्य भेजने पर प्राप्य है।

प्राप्तिस्थान—
प्रकाशन-विभाग
कामेश्वरसिंह-दरभङ्गा-संस्कृत-विश्वविद्यालय
दरभङ्गा-पि० को० ८४६००४